हे भगवन् षाड्गुण्यपरिपूर्ण परमपूरुष, ते तव महिम्नः परं पारं जातो जनिष्यमाणश्च देवासुरमनुष्यादिषु कोऽपि न वेत्ति न जानाति। अतः कैमुतिकन्यायेन मनुष्यबुद्धिदूरतरस्य तस्य तथाभूतमहिमशालिनस्तव स्तुतौ तरङ्गितसाहसिक्यो जृम्भितसाहसो मादृशः मनुष्येष्वपि प्रहीणो मद्विधः बुधजनस्य प्रेक्षावल्लोकस्य तव महिमानं देवा अपि न जानन्तीति बुध्यमानस्य हास्यो न भवेत्किम्? हास्यो भवेदेवेति संभावनायां लिङ्। अबुधजनस्येति वा पदविभागः। बुधजनः 'स वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि' इति श्लोकार्थं बुध्यमानो यथाकथंचिदपि स्तुवन्तं प्रशंसेदेव। तस्मादिममर्थमबुध्यमानस्य तव महिमा वाङ्मनसातीत इत्येतावज्जानतो हास्य एव भवेदित्यर्थः। अत्र कैमुतिकन्यायप्रत्यायनादर्थापत्तिरलंकारः। कैमुतिकन्यायेन पूर्ववाक्यार्थस्य मादृश इत्याद्युत्तरवाक्यार्थं प्रति हेतुत्वाद्वाक्यार्थहेतुकं काव्यालिङ्गमलंकारः। तस्मात्तस्य तेन संकरः। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते। स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहाम्॥ हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्। जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः॥ जीयादम्बुधितनयाधररसमास्वादयन्मुरारातिः। अम्बुधिमथनक्लेशं कलयन्सफलं च विफलं च॥' इति तेषां लक्षणोदाहरणानि। एकत्र नि-

बद्धानामलंकाराणामङ्गाङ्गिभावेन समप्राधान्येन संदेहेनैकवाचकानुप्रवेशेन वा मेलने संकरः, तदभावे संसृष्टिरिति भेदः। जातो न वेत्तीत्याद्यर्थे श्रुतिः—'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इति। नापेति, मनसापि न प्राप्तवानित्यर्थः। तत्रैव पुराणवचनानि च—'यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्येत्स तु बालबुद्धिः। रजांसि भूमेर्गणयेत्कथंचित्कालेन नैवाखिलशक्तिधाम्नः॥ चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः। स ते गुणानामयुतैकमंशं वदेन्न वा देववर प्रसीद॥' इत्यादीनि, 'न मे विदुः सुरगणाः प्रभवं न महर्षयः' इत्यादिभगवद्वचनानि च ॥२॥

**मन्ये निजस्खलनदोषमवर्जनीय-**
**मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः।**
**आविश्य देव रसनानि महाकवीनां**
**देवी गिरामपि तव स्तवमातनोति ॥ ३ ॥**

हे देव, गिरां देवी सरस्वत्यपि भगवन्महिमस्तुतौ अवर्जनीयमवश्यंभाविनं निजस्खलनदोषं वाङ्मनसातीते तव महिम्नि आत्मीयमतिविभ्रमदोषमन्यस्य मूर्ध्नि विनिवेश्य अन्यदीयत्वेनाविष्कृत्य केनचिदुपायेन बहिर्बुभूषुः स्वयं बहिर्भवितुमिच्छुः सती महाकवीनां रसनान्याविश्य तव स्तवमातनोतीति मन्ये

इति योजना । अत्र वाग्देव्येव महाकवीनां रसनाग्रेषु नृत्यतीति कविप्रौढोक्तिकल्पितस्यार्थस्य भगवन्महिमस्तुताववर्जनीयं सर्वसाधारणमपि स्वालित्यदोषापवादमसहमानायास्तस्याः केनचिदुपायेन तदपह्नवः फलत्वेनोत्प्रेक्ष्यत इति फलोत्प्रेक्षा । तच्च फलं स्वमर्मगुप्तये परातिसंधानरूपया युक्त्यानुप्राणितमिति तयोः गिरां देवीत्यत्रत्यातिशयोक्तेश्च संकरः । यत्र सरस्वत्या अप्येतादृशी गतिस्तत्र तव स्तोत्रे मादृशस्य कोऽधिकार इत्यसंभवगमककैमुतिकन्यायरूपकाव्यार्थापत्तिद्योतनमुखेनाक्षेपो दृढीकृतः । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥ धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम् । लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥ रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् । त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥ मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः । प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥' इत्युत्प्रेक्षालक्षणोदाहरणानि । 'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये । त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत् ॥ असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् । को वेद कुम्भजः कश्चिन्महाम्भोधिं पिबेदिति ॥' इति युक्त्यसंभवालंकारयोर्लक्षणोदाहरणानि । 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः । पश्य नीलो-

त्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥' इति रूपकातिशयोक्तिलक्षणोदाहरणे । अधिष्ठानस्य स्वशब्देन ग्रहणं विना तस्मिन्नारोप्यस्य वाचकेनैव ग्रहणं निगरणम् । तत्पूर्वकमधिष्ठानस्यारोप्यरूपतयाध्यवसानमाहार्यनिश्चयः । तस्मिन्सति रूपकातिशयोक्तिरिति लक्षणार्थः ॥ ३ ॥

अथ कृतस्याक्षेपस्य समाधानम्—

**नेतस्तथापि तव निर्ममलोकसेव्यां**
**मूर्तिं मदावलमहीधररत्नभूषाम् ।**
**वैकुण्ठ वर्णयितुमस्मि धृताभिलाष-**
**स्त्वन्नामरूपगुणचिन्तनलाभलोभात् ॥ ४ ॥**

हे नेतः प्रभो वैकुण्ठ, तथापि इत्थं हास्यो भविष्यन्नपि निर्ममलोकसेव्यां निरहंकारजनसेवनीयां मदावलमहीधररत्नभूषां हस्तिगिरिशिखरमाणिभूषायमाणां तव मूर्तिं त्वन्नामरूपगुणचिन्तनलाभलोभात् स्तोत्ररचनाकाले तव नाम्नो रूपस्य विग्रहस्य गुणानां च चिन्तनं लप्स्यत इति लोभात् वर्णयितुं धृताभिलाषोऽस्मि । स्वयं कविरित्यभिमानवता अहंकारिणा खल्वपहासः परिहरणीयः । निरहंकारस्य भगवन्नामादिचिन्तनमेव फलमर्थयमानस्य लौकिकापहासः किं करिष्यतीति भावः । अनेन भगवद्विषया भक्तिरूपा रतिरभिव्यज्यत इति

भावध्वनिः । देवतागुरुनृपादिष्वभिव्यज्यमाना रतिर्भाव इत्यु-
च्यते । स्तोत्रनिर्माणप्रतिबन्धकलोकापहासे तथापीत्यनेनावि-
ष्कृते सत्यपि स्तोत्रनिर्माणरूपकार्योत्पत्तिनिबन्धनाद्विभावना-
विशेषोऽलंकारः सत्यपि प्रतिबन्धके कार्योत्पत्त्यनुकूलमुत्तेजकं
स्वस्य कविताद्यभिमानरूपममताशून्यत्वमित्येतान्निर्ममलोकसे-
व्यामिति विशेषणेन भगवतो निर्ममप्रियत्वाभिव्यक्त्या यथा-
कथंचिद्भगवतः स्तवेनापि स्वाभिमतफलावश्यंभावनिश्चयाभि-
प्रायगर्भेण व्यञ्जितमिति परिकरालंकार इत्येतयोः संकरः ।
रत्नभूषां मूर्तिमित्यत्र रूपकेण तयोः संसृष्टिः ' कार्योत्पत्तिस्तृ-
तीया स्यात्सत्यपि प्रतिबन्धके । नरेन्द्रानेव ते राजन्दशत्य-
सिभुजंगमः ॥ ' इति तृतीयविभावनाया लक्षणोदाहरणे ।
' अलंकारः परिकरः साभिप्राये विशेषणे । सुधांशुकलितोत्तं-
सस्तापं हरतु वः शिवः ॥ वर्ण्यं विषयिरूपेण गद्यते यदि
रूपकम् । पद्मं तन्वङ्गि ते नेत्रं मुखं ते चन्द्रमण्डलम् ॥ '
इति परिकररूपकयोर्लक्षणोदाहरणानि । निर्मम इत्यत्र मम-
शब्देनाव्ययेन ममतारूपाभिमानविशेषपरेण निरित्युपसर्गस्य
समासः ॥ ४ ॥

ननु तथापि वर्णयितुं धृताभिलाषोऽस्मीत्ययुक्तम् , ' प्रज्ञां
नवनवोन्मेषशालिनीं प्रतिभां विदुः ' इत्युक्तलक्षणप्रज्ञाविशे-
षभूषितशेमुषीकैर्महाकविभिः कृतस्यैव वर्णनस्य सहृदयहृद-

याह्लादकारित्वाद्भगवन्महिमतत्त्वपरिज्ञानानपेक्षणेऽपि काव्य-सरणौ तन्मात्रापेक्षणादित्याशङ्क्य स्वस्य तथाभूतप्रतिभाराहित्यरूपं कवितामान्द्यं स्वाभिलषितफलसाधने भगवद्विग्रहवर्णने साधकमेव न तु बाधकमित्येतदुपपादयति—

**मन्ये सृजन्त्वभिनुतिं कविपुंगवास्ते**
**तेभ्यो रमारमण मादृश एव धन्यः ।**
**त्वद्वर्णने धृतरसः कवितातिमान्द्या-**
**द्यस्तत्तदङ्गचिरचिन्तनभाग्यमेति ॥ ५ ॥**

हे रमारमण, कविपुंगवाः कविश्रेष्ठा महाकवयः । ' श्रेष्ठोक्षाणौ तु पुंगवौ ' इति वैजयन्ती । तवाभिनुतिं स्तोत्रं सृजन्तु शब्दतोऽर्थतश्च महाप्रबन्धरूपं स्तोत्रं निर्मिमताम् । ' प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ' इत्यतिसर्गे लोट् । अतिसर्गः कामचाराभ्यनुज्ञानम् । तेभ्यो महाकविभ्यो मादृशो मन्द एव धन्यः सुकृती स्वाभिलषितफलरूपं धनं लब्धा वा इति मन्ये । ' मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण शारिका ' इत्यत्रेवेह मन्ये-शब्दः संभावनामात्रपरः, न तु प्रौढोक्तिकल्पितार्थविषयसंभावनारूपोत्प्रेक्षापरः, इह तदभावात् । यो' मादृशः त्वद्वर्णने धृतरसो धृतादरः कविताया अतिमान्द्यात्त्वरितं स्तोत्रं निर्मातुमशक्नुवन् तत्तदङ्गचिरचिन्तनभाग्यम्

एति प्राप्नोति । महाकवयस्तु भगवन्तं तुष्टूषवस्तदवयववर्णनोचितविविधचित्रार्थसमूहालम्बनज्ञानवन्तो वश्यवाचः सन्तः क्षणेन भगवत्स्तोत्ररूपं प्रबन्धं सृजन्तीति न तैश्चिराचिन्तनभाग्यं लभ्यत इति भावः । उत्तरवाक्ये सत्यपि यत्पदे पूर्ववाक्ये विशेष्यनिर्देशकपदान्तरवति न तन्निर्देशकं तत्पदं प्रयोक्तव्यम्; पूर्ववाक्यार्थावगतिसमये यत्पदश्रवणाभावेन तत्प्रतिनिर्देशकाकाङ्क्षाविरहात्, 'वृत्रस्य त्वावसथादीक्षमाणा विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्तु अथेमा विश्वाः पृतना जयासि ॥' 'वीरप्रसूर्जगति भार्गव रेणुकैव या त्वां त्रिलोकतिलकं सुतमभ्यसूत । शक्रेभकुम्भतटखण्डनचण्डधारो येनैष मे न गणितो युधि चन्द्रहासः ॥' इत्यादिलौकिकवैदिकप्रयोगाणां तथैव दर्शनात् । अतोऽत्र पूर्ववाक्ये तत्पदाप्रयोगः । अत्र पूर्ववाक्यार्थे उत्तरवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः, तेभ्यो मादृशो धन्य इति महाकविभ्यः स्वस्याधिक्यवचनात्, कवितातिमान्द्यादिति तेभ्यो निकर्षवचनाच्चाधिकन्यूनरूपौ व्यतिरेकालंकारौ चेत्येतेषां संकरः । इहैकप्रतियोगिकन्यूनाधिकव्यतिरेकयोर्विरुद्धयोरपि 'जीयादम्बुधितनया—' इति श्लोके विफलत्वसफलत्वयोरिव मुखभेदेन प्रवृत्तेः समावेशोपपत्तिः। अलंकारसर्वस्वकृता न्यूनव्यतिरेकमप्यङ्गीकृत्य 'क्षीणः क्षीणो-

ऽपि शशी भूयो भूयोऽपि वर्धते नित्यम् । विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥' इति तदुदाहरणीकृतम् । काव्यप्रकाशिकाकारेण तु—अतिरेको विशेषः, विशिष्टोऽतिरेको व्यतिरेक इत्यवयवव्युत्पत्तिमाश्रित्य अधिकव्यतिरेक एवालंकारः न्यूनव्यतिरेकस्य नास्त्युदाहरणम् 'क्षीणः क्षीणोऽपि—' इति श्लोके चन्द्राद्यौवनस्यास्थायित्वगुणे आधिक्यं विवक्षितमिति सोऽप्यधिकव्यतिरेकस्यैवोदाहरणमित्युक्तम् । अस्माभिस्तु कुवलयानन्दे न्यूनाधिकसमानरूपास्त्रिविधो व्यतिरेकः सोदाहरणं लिखितः । एवं प्रतिभारहितस्य स्तोत्रनिर्माणनिवृत्तिसाधकशङ्कास्पदस्य तत्प्रवृत्तावेव साधकत्वसमर्थने श्लोकस्य पर्यवसानादुक्तालंकारत्रयपरिष्कृतार्थशक्तिमूलो व्याघातविशेषालंकारध्वनिः । 'सौकर्येण निबद्धा या क्रिया कार्यविरोधिनी । सा तु द्वितीया व्याघातालंकृतिः कथ्यते बुधैः ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥' इति तल्लक्षणोदाहरणे ॥

एवं स्तोत्रारम्भ उपपादितः । अथ स्तोत्रमारभ्यते—

**काञ्ची महार्घमणिकाञ्चनधामचित्रा**
**विश्वंभरां विबुधनाथ विभूषयन्ती ।**
**भाता गजाद्रिशिखरे तव भक्तचिन्ता-**
**रत्नेन राजतितरां शुभविग्रहेण ॥ ६ ॥**

हे विबुधनाथ देवराज , महार्घाणां महामूल्यानां मणिकाञ्चनानामुत्तमरत्नानां शुद्धसुवर्णस्य च संबन्धीनि यानि धामानि स्वर्णनिर्मितानि अन्तःप्रत्युप्तरत्नानि च नगरवासिनां गृहाणि, महार्घाणि महापूजायुक्तानि मणिस्वर्णरूपाणि भगवन्मन्दिराणि च तैश्चित्रा भोगमोक्षप्रदत्वेनाश्चर्यभूता नानारूपा च । ' मूल्ये पूजाविधौ चार्घः ' इत्यमरः । 'धाम जन्मप्रभास्थानप्रभावसुखसद्मसु ' इति यादवः । ' चित्रं नपुंसकं पुण्ड्रे स्यादालेख्येऽप्यथ त्रिषु । आश्चर्ये कर्बुराभिख्यवर्णयुक्तेऽप्यथो पुमान् ॥ ' इति केशवः । अत एव विश्वंभरां भूमिं विभूषयन्ती अलंकुर्वती काञ्ची केन ब्रह्मणा सृष्टिवृद्ध्यर्थं नित्यमञ्चिता पूजितेति काञ्ची । तदुक्तं शिवपुराणसंग्रहे—'अपूजयच्च तत्क्षेत्रमन्तर्वेदीति तच्छ्रुतम् । निष्प्रत्यूहा ततः सृष्टिस्तेन प्रावर्तत द्विजाः ॥ केन स्वयंभुवा तेन सा पुरी नित्यमञ्चिता । ततः काञ्चीति विख्याता चतुर्वर्गफलप्रदा ॥ ' इति । गजाद्रिशिखरे ' दिङ्नागैरर्चितस्तत्र पुरा विष्णुः सनातनः । ततो हस्तिगिरिर्नाम ख्यातिरासीन्महागिरेः ॥ ' इति पुराणप्रसिद्धाभिधानश्रीहस्तिगिरिशृङ्गे भाता भासमानेन भक्तचिन्तारत्नेन भक्तानां चिन्तामणिवद्दर्शनादेवाभिमतसकलार्थप्रदेन तव शुभेन विग्रहेण सुन्दरेण मङ्गलेन प्रशस्तेन च वपुषा । ' मञ्जुप्रशस्तयोश्चापि मङ्गलेन समन्विते । शुभशब्दोऽपि नानार्थः प्रशस्त

इति केशवः ॥' तरुणीजनमोहनत्वेन भक्तजनभोगमोक्षप्रद-त्वेन भगवद्विग्रहो वर्णनीय इष्यत इति तदनुसारेणार्थत्रयप-रिग्रहः । राजतितराम् । काञ्चीपुरी मणिगृहैर्विराजमाना तव दिव्यविग्रहेणात्यर्थं राजतीत्यर्थः । अत्र काञ्चीति मेखला-प्यभिधीयते । सा मणिकाञ्चनानां धामभिः प्रभाभिश्चित्रा । विश्वंभरामिति स्त्रीलिङ्गाद्गम्यमानामुत्तमनायिकां विभूषयन्ती । गजाद्रिशिखर इति शिखरशब्देन प्रतीयमाने नायकरत्ननिधा-नोचिते मध्यदेशे भासमानेन भगवद्विग्रहेणैव दिव्यमणिना राजतितरामिति । अत्र शुभाविग्रहेण चिन्तारत्नेनेति व्यस्त-रूपकम् । तदुत्थापितं काञ्चीधामशब्दयोः श्लिष्टरूपकम् । एवमेकदेशे वाच्यतया वर्तमानैर्व्यस्तश्लिष्टरूपकैर्विश्वंभराया मेखलाभूषणीयोत्तमस्त्रीत्वं गजाद्रिशिखरस्य मेखलानायकरत्न-निधानार्हमध्यदेशत्वं च गम्यत इत्येकदेशविवर्तिरूपकालं-कारः । एकदेशे विशेषेण वाच्यतया वर्तते अन्यत्र गम्यतये-त्येवमेकदेशविवर्तित्वमिह रूपकस्य । न च 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यत्रेव विशेषणसाम्यादप्रस्तु-तस्य गम्यत्वे समासोक्तिरिति लक्षिता समासोक्तिरिह शङ्क-नीया । यत्र प्रस्तुते अप्रस्तुतरूपसमारोपस्तत्र रूपकम्, यत्र प्रस्तुते अप्रस्तुतवृत्तान्तमात्रसमारोपस्तत्र न रूपकं किं तु समा-सोक्तिरिति हि रूपकसमासोक्त्योर्भेदः । ततश्च ऐन्द्रीचन्द्रयोः

परवनिताजारपुरुषसमभिव्याहाराभावेन तद्वृत्तान्तमात्रसमारोप इति तत्र समासोक्तिरस्तु । इह तु शुभविग्रहचिन्तारत्नशब्दयोः सामानाधिकरण्यात्प्रस्तुते अप्रस्तुतरूपसमारोपोऽस्तीति तदानुगुण्याद्विश्वंभरामित्यत्रापि नायिकाताद्रूप्यस्यैव गम्यमानस्य समारोप इत्येकदेशविवर्तिरूपकमेव युक्तम् 'केलीतल्पं भुवो बाहुशिखरं वेङ्कटप्रभोः' इत्यत्रेवेति सर्वमनवद्यम् । काशीखण्डे काञ्ची भगवत्प्रसादादैश्वर्यसमृद्धिमती वर्णिता—'एवमाराध्य भूतेशं महाकालं ततो द्विजः । जगाम नगरीं काञ्चीं कान्तां त्रिभुवनादपि ॥ लक्ष्मीकान्तः स्वयं साक्षाज्जन्तूंस्तत्र निवासिनः । श्रीकान्तानेव कुरुते परत्रेह च निश्चितम् ॥' इति । तदर्थस्मारणाय समृद्धिमत्ता वर्णिता । तस्य चान्तर्वेदिरूपायां काञ्च्यां भगवत्प्राधान्यप्रत्यायकस्य स्मारणं नायकरत्नत्वरूपणनिर्वाहार्थमिति । एवमनर्घमणिकाञ्चनधामचित्रेति विशेषणं साभिप्रायम् । अतः परिकरालंकारः । तत्रैव समृद्धिमद्वस्तुवर्णनरूप उदात्तालंकार इति तयोरेकवाचकानुप्रवेशलक्षणः संकरः । रूपकेण च तयोरङ्गाङ्गिभावेन संकरः । 'उदात्तं वर्णनं यत्र समृद्धियुतवस्तुनः' इति तल्लक्षणम् । 'रत्नस्तम्भेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः । ज्ञातः कथंचन मया सभायां वेङ्कटप्रभुः ॥' इति तस्योदाहरणम् ॥ ६ ॥

अस्यां भवन्तमभितःस्थितदुग्धसिन्धौ
मध्ये त्रयीमयमहारविमण्डलस्य ।
पश्यन्नधःकृतचतुर्मुखविष्टपायां
धामत्रयेऽपि कुतुकं विजहाति विद्वान् ॥

त्रयीमयमहारविमण्डलस्य त्रयीमयो वेदत्रयप्रचुरो महानारवो घोषोऽस्मिन्निति तथोक्तम्, तथाभूतस्य मण्डलस्य स्वराज्ये सर्वाणि वेदशास्त्राणि शिवनियोगात्प्रतिष्ठापितवतस्तुण्डीराख्यस्य नृपतेर्नाम्नाङ्कितस्य देशस्य मध्ये अभितःस्थितदुग्धसिन्धौ अन्तिकप्रवहत्क्षीरसरिति 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यभिधानकोशः । अधःकृतचतुर्मुखविष्टपायां माहात्म्येन ब्रह्मलोकातिशायिन्याम् अस्यां काञ्च्यां भवन्तं पश्यन्विद्वान् धामत्रयेऽपि श्वेतद्वीपरविमण्डलपरमपदरूपे भगवतः स्थानत्रयेऽपि कुतुकं दिदृक्षां विजहाति, अस्या एव स्थानत्रयगुणयुक्तत्वात् । तथा हि— अभितःस्थितदुग्धसिन्धावित्यत्र श्वेतद्वीपगुण उक्तः । स हि क्षीरोदमध्ये भगवतो दिव्यस्थानविशेष इति प्रपञ्चितं कूर्मपुराणे— 'शाकद्वीपं समावृत्य क्षीरोदः सागरः स्थितः । श्वेतद्वीपश्च तन्मध्ये नारायणसमाश्रयः ॥' इत्युपक्रम्य 'तत्र नारायणस्याद्यं दुर्गमं दुरतिक्रमम् । नारायणं नाम पुरं प्रा-

सादैरुपशोभितम् ॥' इत्यादिना भगवतः पुरं वर्णयित्वा 'तस्य मध्येऽतितेजिष्ठमुच्चप्राकारतोरणम् । स्थानं तद्वैष्णवं दिव्यं योगिनामपि दुर्लभम् ॥' इति तत्र भगवतः स्थान-मुक्त्वा 'तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः । शेतेऽशे-षजगत्सूतिः शेषाहिशयने हरिः ॥ विचिन्त्यमानो योगीन्द्रैः सनन्दनपुरोगमैः । आत्मानन्दामृतं पीत्वा परस्तात्तमसः परम् ॥ स पीतवसनोऽनन्तो महामायो महाभुजः । क्षीरोदक-न्यया नित्यं गृहीतचरणद्वय ॥ सा च देवी जगद्वन्द्या पाद-मूले हरिप्रिया । समास्ते तन्मना नित्यं पीत्वा नारायणामृतम् ॥ न तत्राधार्मिका यान्ति न च देवान्तराश्रयाः । वैकुण्ठं नाम तत्स्थानं त्रिदशैरपि वन्दितम् ॥ न मेऽत्र भवति प्रज्ञा कृत्स्नशस्तन्निरूपणे । एतावच्छक्यते वक्तुं नारायणपुरं हि तत् ॥ स एव परमं ब्रह्म वासुदेवः सनातनः । शेते नारायणः श्रीमान्मायया मोहयञ्जगत् ॥' इति तत्र भगवतो नित्यसंनिधानमुक्तम् । त्रयीमयस्य 'आदित्यो वा एष एतन्मण्डलम्' इत्यादित्यमण्डलार्चिःपुरुषस्य वेद-त्रयरूपतयाऽऽम्नातस्य 'नवयोजनसाहस्रो विस्तारो मण्ड-लस्य तु । दशयोजनसाहस्रो विस्तारायामतो रथः ॥' इति वायु-पुराणोक्तेनवयोजनसहस्रप्रमाणतया महतो मण्डलस्य सार्चिः-पुरुषस्य मध्ये भगवतोऽवस्थानम् 'य एषोऽन्तरादित्ये हिर-

ण्मयः पुरुषो दृश्यते' इत्यादिश्रुतौ 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः—' इत्यादिपुराणवचनेषु च प्रसिद्धम् । ब्रह्मसदनात्परं भगवतः परमपदमिति च तेषु प्रसिद्धम् । यथा तावत्कूर्मपुराणे— 'तत्र नारायणस्यापि भवनं ब्रह्मणः परम् । शेते तत्र हरिः श्रीमान्मायी मायामयः परः ॥ स विष्णुलोकः कथितः पुनरावृत्तिवर्जितः । यान्ति तत्र महात्मानो ये प्रपन्ना जनार्दनम् ॥ ऊर्ध्वं तद्ब्रह्मसदनात्पुरं ज्योतिर्मयं शुभम् ॥' इति । काञ्चीसमीपे क्षीरनदी ब्रह्माण्डपुराणे दर्शिता— 'पुरा कदाचिद्वासिष्ठे कामधेनुस्तपोवने । अवत्सा पयसां पूरं होमार्थं दुहती स्वयम् । तस्थौ शुष्यद्भिरूधस्यैः संप्राप्ता परमं श्रमम् ॥ तस्या विकृतिमालोक्य वासिष्ठस्तामपोहितुम् । विधाय कूर्चं मन्त्रेण वत्सरूपं पुरोऽदिशत् ॥ स कूर्चः सहसा भूत्वा वत्सो धेनुमुपाययौ । सा वत्सलैव वत्सं तमङ्के धेनुर्लिलेह च ॥ प्रीतिकण्टकितैरङ्गैः प्रस्नुतस्तनमण्डला । प्रक्षरद्भिस्तदा धेनुर्महौघैः पयसां निजैः । उल्लङ्घितोभयतटामुदपादयदापगाम् ॥ एषा काञ्चीपुरं प्राप्य कलशार्णवकाङ्क्षिणी । अगादालोलशैवाला स्खलन्ती च पदे पदे ॥' इति, 'अस्ति वासिष्ठगोक्षीरधाराकृतमहापगा । क्षीरापगेति विख्याता नाम्ना तेन जगत्त्रये ॥ तस्या दक्षिणतः काञ्च्या नातिदूरे तरङ्गिणी । स्कन्दाभिषेकसंभूता स्कान्दीति प्रथिता-

ऽऽपगा ॥ अन्तरालं तयोर्मध्यमन्तर्वेदीति विश्रुतम् । काञ्ची-स्थानमिदं विद्धि ख्यातं द्वादशनामभिः' इति च । वामन-पुराणे तु—'सरस्वती पञ्चरूपा कालिन्दी सहिरण्वती' इत्युपक्रम्य 'सरयूश्च समालक्ष्या हिमवत्पादनिःसृता' इत्यन्तेन हिमवत्पादप्रभवा नदीः कीर्तयित्वा ततो विन्ध्यपादप्रभवाणामपि कीर्तनानन्तरम् 'गोदावरी भीमरथी कृष्णवेणी सरस्वती' इत्युपक्रम्य 'एताश्चापि महानद्यः सह्यमूलाद्विनिर्गताः' इत्यन्तेन सह्योद्भवादिनामसंकीर्तनेऽपि सरस्वती परिगणिता । सा वेगवती सैव क्षीरनदीति च वामनपुराण एव प्रदेशान्तरे स्पष्टीकृतम्—'सरस्वती ततः सह्यमारुह्याशु महानदी । महाप्रलयसंकाशा प्रायाद्वेगेन भारती ॥ नाम्ना वेगवती सेयं भूलोकेऽतीव विश्रुता । प्रागुदक्प्रवहा वेगात्प्रययौ सागरं प्रति ॥ तां तु क्षीरनदीं प्राहुः प्रसन्नसलिलोद्वहाम् ॥' इति । कालभेदेन प्रवृत्तयोरुभयोरेकीभावान्न विरोधः । हरिवंशे वराहप्रादुर्भावे श्रीवराहरूपेण भगवता पृथिव्युद्धरणानन्तरं तस्यां चतसृष्वपि दिक्षु बहवः शैलाः सृष्टाः । एकैकस्यां दिशि एकैकशैलप्रभवा वसुधारा पयोधारा घृतधारा मधुधारेति चतस्रो नद्यश्च विसृष्टा इत्युक्तम् । तत्र दक्षिणस्यां दिशि विन्ध्ये सृष्टा पयोधाराख्या । 'मेदिन्यां कृतवान्देवः प्रतिमेरुमिवाचलम् । सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ॥

नदीं च विपुलावर्तां पुलिनश्रेणिभूषिताम्। क्षीरसंकाशसलिलां पयोधारामिति श्रुताम् ॥' इति । सैषा क्षीरनद्येव भवितुमर्हति, तत्र पयःसंबन्धिनो नद्यन्तरस्य प्रसिद्ध्यभावात् । न च विन्ध्याद्दक्षिणभाग एव क्षीरनदी वर्णिता न तु विन्ध्य इति शङ्कनीयम् , तस्य दक्षिणसमुद्रतीरपर्यन्तव्याप्तेः श्रीरामायणे दर्शितत्वात् । तत्र हि— ' एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलतायुतः । एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥' इति हनूमदादीन्प्रति मेरुसावर्णितनयावचनम् । तदनन्तरम् ' ततस्ते ददृशुर्घोरं सागरं वरुणालयम्' इति तत्र स्थितानामेव तेषां दक्षिणसमुद्रदर्शनं दर्शितम्— ' ते विन्ध्यस्य गिरेः पादे संप्रपुष्पितपादपे । उपविश्य महाभागाश्चिन्तामापेदिरे तदा ॥' इति तत्र तेषामुपवेशनं तत्र समागतस्य संपातेः सूर्यसामीप्याद्दग्धपक्षः स्वयमिहैव पतित इति कंचित्कालमनवहितः स्थितोऽस्मीत्युक्तवतः ' हृष्टपक्षिगणाकीर्णः कंदरान्तरकूटवान् । दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः ॥' इति। भ्रातुर्जटायोर्मरणं श्रुतवता तेन जटायुमुद्दिश्य निवापाञ्जलिदानं समुद्र एव कृतमिति चोक्तम् । तदनन्तरवचनं च दर्शितम् । एवं श्रीवराहेण पृथिव्युद्धरणानन्तरं क्षीरसमानवर्णतया सृष्टत्वेन क्षीरनदीति लब्धसंज्ञायामनादिसिद्धायामेव नद्यां कामधेनुप्रभवनद्याः सरस्वतीरूपाया

वेगवत्याश्च समागम इति सर्वाविरोधः कल्पनीयः। अत्र काञ्चीस्थानस्यातिदुर्लभस्थानत्रयकुतुकनिवर्तकत्वोक्त्या किंचित्करणेनाशक्यवस्त्वन्तरकरणाद्विशेषालंकारविशेषः, श्वेतद्वीपाद्येकैकमपेक्ष्याधिक्यरूपो व्यतिरेकालंकारश्चेति तयोरेकवाचकानुप्रवेशलक्षणः संकरः। तयोश्च सिन्ध्वाद्यभङ्गश्लेषेण महारवीति सभङ्गश्लेषेण अधःकृतेत्यतिशयोक्त्या चाङ्गाङ्गिभावसंकरः। यद्यपि श्रीविष्णुपुराणे– 'ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः। एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम्॥ निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम्। स्थानं तत्परमं विप्र पुण्यपापपरिक्षये॥ अपुण्यपुण्योपरमे क्षीणाशेषार्तिहेतवः। यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम्॥' इति स्वर्लोकस्योपरितनभूमिभेदरूपं ध्रुवपदं तृतीयं वैष्णवं परमं पदमिति वर्णितम्, तथापि ब्रह्मलोकादधस्तनं तदिह न गृह्यते, किं तूपरितनमेवेति द्रष्टव्यम्॥ ७॥

**अस्याममेयगुण पुर्यपराजिताया-**
**मश्वत्थवर्यजुषि दिव्यसरःसमीपे।**
**मध्येहिरण्मयगृहं महिषीयुतं त्वां**
**दृष्ट्वा जनो न पुनरेति भवान्तरार्तिम्॥**

हे अमेयगुण असंख्येयकल्याणगुण, अपराजितायाम् अपराभिः पुरीभिरजितायाम्। सर्वपुर्यतिशायिन्यामिति यावत्। तथोक्तं वामनपुराणे— 'तेजस्विनां यद्वदिहार्क उक्तो नारीषु रम्भाऽऽश्रमिणां गृहस्थः। काञ्ची तथा श्रेष्ठतया पुरीणां देशेषु सर्वेषु च मध्यदेशः ॥' इति। सनत्कुमारसंहितायाम्— 'श्रीमत्काशी पुरीवासाद्वासः काञ्चीपुरे वरः। पुराणामुत्तमा द्वारैः शुशुभे द्वारकोपमा ॥ प्रासादैर्गोपुरैः शुभ्रैः प्राकारैरपि सूचकैः। विष्णोः प्रियालयैस्तीर्थैरयोध्येव पुरातनी ॥ योजनत्रयविस्तीर्णा वासुदेवप्रियालया। नागपर्यङ्कशय्यायां यत्र शेते हरिः स्वयम्। नाशयञ्जगतां पापं काष्ठां गतमपि प्रभुः॥' इति। अपरैर्विमतैरजितायामिति वा। अस्यां पुरि काञ्चीपुर्यां दिव्यसरःसमीपे 'पञ्च तीर्थानि सन्त्यत्र नागाद्यैर्नामभिः शुभैः। अनन्ततीर्थं ब्राह्मं च हेमाम्भोजसरस्तथा ॥ अग्नितीर्थं कुशाख्यं च कीर्तितानि मनीषिभिः। एतेषामपि सर्वेषां श्रेष्ठं नागाह्वयं सरः॥' इति पुराणप्रसिद्धमनन्तनामाङ्कितं सरो दिव्यसरः तस्य समीपे। कीदृशे? अश्वत्थवर्यजुषि अनन्तसरःप्राग्भागे श्रीमानश्वत्थवृक्षः प्रसिद्धः तदलंकृते, मध्येहिरण्मयगृहम्। 'पुण्यकोटीति विख्यातं विमानं पुण्यवर्धनम्। वेदिमध्यात्समुत्तस्थौ तस्य मूर्तिः स्वयं पुरा ॥ तन्मध्ये भगवान्विष्णुरभिव्यक्तो हरिः स्वयम् ॥' इति पुराणप्रसिद्धं पुण्यकोटि-

विमानं हिरण्मयगृहम्। तस्य मध्ये महिषीयुतं वक्षःस्थलस्थितया श्रिया वा पार्श्वद्वयवर्तिनीभ्यां श्रभूमिभ्यां वा युतं त्वां जनो यः कश्चिदपि दृष्ट्वा पुनः भवान्तरार्तिं जन्मान्तरक्लेशं नैति न प्राप्नोति। अत्रापराजितादिशब्दशक्त्या भगवद्भक्तैस्तं प्रपन्नैरर्चिरादिमार्गेणाप्राप्येति, 'ओं नमो नारायणाय' इति मन्त्रोपासको वैकुण्ठं भगवल्लोकं गमिष्यतीति नारायणोपनिषदि 'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः। आस्ते नित्यमचिन्त्यात्मा भक्तैर्भागवतैः सह॥' इत्यादिपुराणवचनेषु च प्रख्यातवैकुण्ठनामकपरमपदवद्भगवद्दर्शनमपुनरावृत्तिकारणमित्यपि प्रतीयते। श्रूयते हि च्छन्दोगोपनिषदि परमपदसंस्थानम्— 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' इति। एवं चात्र सतामुक्तरूपे परमपदे भगवद्दर्शनं यथा अपुनरावृत्तिकारणमेवमिहापीत्यपराजितशब्दश्लेषेण अश्वत्थाद्यर्थश्लेषेण च प्रतीतेः शब्दार्थशक्तिमूल उपमालंकारध्वनिः। 'यत्रार्थिकोऽपि शब्दानामनेकत्र समन्वयः। विदग्धहृदयाह्लादी सोऽर्थश्लेषः प्रकीर्त्यते॥ दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम्। पुण्यहीना न पश्यन्ति गङ्गाधरमिवात्मजम्॥' इत्यर्थश्लेषस्य लक्षणोदाहरणे॥ ८॥



**संप्राप्य दुग्धतटिनीविरजां विशुद्धाः**
**सन्तो भवद्भजनदां पदमागतास्ते ।**
**त्वत्पादतोयतुलसीकुसुमेषु लग्नं**
**गन्धं रसं च गरुडध्वज ते लभन्ते ॥ ९ ॥**

हे गरुडध्वज, भवद्भजनदां त्वयि भक्तिप्रदां विरजापक्षे भवत्प्राप्तिप्रदां दुग्धतटिनीमेव विरजां संप्राप्य दर्शनस्पर्शनपानावगाहनैः पक्षे सूक्ष्मदेहस्यापि विलयेन विशुद्धा निर्मलाः सन्तः साधवः, 'सत्ये साधौ च सच्छब्दः' इति स्मरणात् । विरजापक्षे ब्रह्मज्ञाः, 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रवणात् । ते तव पदं काञ्चीं पक्षे परमं पदमागताः प्राप्ताः सन्तः, त्वत्पादतोयतुलसीकुसुमेषु त्वदङ्घ्रिपद्मक्षालनजलेषु तदर्चनतुलसीकुसुमेषु च त्वत्सेवावसरलब्धेषु लग्नं संक्रान्तं ते तव संबन्धिनं त्वदङ्घ्रिकमलयोः कर्पूराद्यनुलेपनप्रयुक्तं सहजं च दिव्यं गन्धं रसं च लभन्ते । क्षीरसरितो भगवद्भक्तिप्रदत्वं विशुद्धिहेतुत्वं च भागवते वर्णितम्—'कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महापुण्या सुप्रती च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजाधिप । प्रायो भक्ता



भगवति वासुदेवेऽमलाशयाः ॥' इति । विरजायाः परमपद-प्राप्तिहेतुत्वम् 'स आगच्छति विरजां नदीं तां मनसैवात्येति' इति श्रुतम । तदुत्तरणानन्तरमेव परमपदप्राप्तेस्तस्याः शुद्धिहेतुत्वम् , तदुत्तरणानन्तरमेव मध्ये चन्द्रसंवादाद्यर्थं तावत्पर्यन्तमनुवृत्तस्य प्राकृतस्य सूक्ष्मदेहस्यापि विलयात्तदतिक्रमणानन्तरमेव भगवल्लोकं प्रविष्टस्य भगवद्देहदिव्यगन्धरसप्राप्तिरपि पर्यङ्कविद्यायां श्रुता 'तं ब्रह्मगन्धः प्रविशति तं ब्रह्मरसः प्रविशति' इति च । यद्यपि पर्यङ्कविद्यायाम् 'तद्ब्रह्माहाभिधावत मम यशसा विजरां वा अयं नदीं प्रापन्न वा अयं जरिष्यति' इत्यर्चिरादिमार्गेण विरजानदीसमीपमागतस्य ब्रह्मज्ञस्य प्रत्यागमनार्थं पञ्चशतान्यप्सरसां प्रेषयतः परब्रह्मणो भगवतो वचने विजरेति नदीनाम श्रुतं तथैव तत्र निरुक्तं च, तथापि लोकप्रवादानुसाराद्विरजामिति श्लोके प्रयुक्तम । विजरामिति वा पाठः कार्यः। अत्र भवद्भजनदामिति सामान्यप्रयोगात् दुग्धतटिनीविरजामित्यत्र मयूरव्यंसकादिसमास इति रूपकालंकारः । तन्मुखेन काञ्चीपुरस्य परमपदत्वरूपणं गम्यत इत्येकदेशविवर्ती । स च शब्दश्लेषेणार्थश्लेषैश्चानुप्राणित इति संकरः ॥ ९ ॥

**सौवर्णसालवलयान्समनुप्रविश्य**
**कोशानिव त्रिदशनायक कोऽपि धन्यः ।**

आनन्दवल्ल्युदितदिव्यफलानुरूपं
रूपं त्वदीयमवलोकयतेऽभिरूपम् ॥ १० ॥

हे त्रिदशनायक देवराज, सौवर्णसालवलयान् काञ्च्यां भवन्मान्दिरस्य ये काञ्चनप्राकारवलयाः तान् चतुरः पञ्च वा अनुप्रविश्य कोऽपि धन्यः अनेकजन्मार्जितसुकृतपरिपाकशाली विपश्चित्कश्चित् त्वदीयमभिरूपं सुन्दरं रूपं दिव्यविग्रहमवलोकयते । कीदृशम ? आनन्दवल्ल्युदितादिव्यफलानुरूपम् आनन्दरूपायां लतायामुदितमुत्पन्नं यत्फलं तदनुरूपं तत्समानम । वल्ल्यपेक्षया फलमेव खलु स्वादुतरम् । ततश्चानन्दवल्ल्युत्पन्नफलसाम्योक्त्या लौकिकमानुषानन्दादिहैरण्यगर्भानन्दपर्यन्तो य आनन्दः प्रसिद्धः तदपेक्षयात्यन्तातिशयशाल्यवाङ्मनसगोचरमानन्दरूपत्वमनयोक्तिभङ्ग्या दर्शितं भवति । कोशानिवेत्युपमा । तैत्तिरीयाणामानन्दवल्ल्याख्येऽनुवाके यन्निरतिशयानन्दपरिपूर्णं परं ब्रह्म प्रतिपादितं ताद्रूप्यमिह भगवद्विग्रहस्यासूचितम् । तन्निर्व्युढमुत्तरार्धेन । आनन्दवल्ल्यामन्नमयप्राणमयमनोमयविज्ञानमयाख्याश्चत्वारः कोशाः सानन्दमयाः पञ्च वा प्रतिपिपादयिषितस्य ब्रह्मणः सुखप्रतिपत्त्यर्था निरूपिताः । तेषामनुप्रवेशः प्रतिपत्तिः, 'यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥' इति तस्यां तत्प्र-

योगदर्शनात् । एवं च पूर्वपूर्वप्रहाणेनोत्तरोत्तरानुप्रवेशः कोशेषु सालेषु चास्तीति तत्साम्यम । आनन्दवल्ल्यामुदितमुक्तं यत्फलम् 'सोऽश्नुते सर्वान्कामान्' इति 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति च । तस्यानुरूपं तत्प्रदानोचितकरणे अभिरूपं विश्रुतं विचक्षणं वा । 'अभिरूपः सुरूपे च विश्रुते च विचक्षणे' इति केशवः । विश्रुतं हि भगवद्रूपमानन्दवल्ल्यादिषूपनिषत्सु । विपश्चिच्च सः, 'ब्रह्मणा विपश्चिता' इति श्रुतेः । एवंभूतं रूपं निरतिशयानन्दपरिपूर्णं परब्रह्मस्वरूपमेव । ताद्रूप्यमिह भगवत्स्वरूपस्य कविसंरम्भगोचरः । न चोपमोपक्रमादग्रेऽप्युपमयैव भाव्यमिति नियमोऽस्ति, भेदगर्भोपमापेक्षया रूपकस्योत्कृष्टत्वेनोपमोपक्रमस्यापि रूपकपर्यवसानोपपत्तेः । रूपकमुपक्रम्योपमापर्यवसानकरणे हि प्राक्प्रकर्षता स्यात् । तस्मादुपमया आनन्दवल्ल्युदितेत्यादिश्लेषेण चोत्थापिता भगवद्रूपमिदमेवानन्दवल्लीप्रतिपादितं परब्रह्मरूपमित्यभेदाध्यवसानरूपातिशयोक्तिरलंकारः ॥

**मातङ्गशैलमणिशृङ्गमहाविमान-**
**सोपानपर्वचतुरुत्तरविंशतिर्या ।**
**तामेव तत्त्वविततिं पुरुषो विलङ्घ्य**
**पश्यन्भवन्तमुपयाति भवाब्धिपारम् ॥**

मातङ्गशैले हस्तिगिरौ प्रादुर्भूतं यत्पुण्यकोट्याख्यं महाविमानं तत्समीपप्राप्त्यर्थं गिरेरधिरोहणाय चतुर्मुखेण क्लृप्ता या सोपानपर्वणां चतुर्विंशतिः तामेव तत्त्ववितार्तिमिति व्यस्तरूपकम् । तत्त्वानां मूलप्रकृतिमहदहंकारपञ्चतन्मात्रपञ्चभूतैकादशेन्द्रियरूपतया चतुर्विंशतिसंख्यानां वितार्तिं पङ्क्तिमतिलङ्घ्य पुरुषः पञ्चविंशः भवन्तं षड्विंशमीश्वरं पश्यन्भवाब्धेः पारमुपयाति । विषयदोषदर्शनेन त्यक्तसकलप्रकृतिविकारो विरक्तः खलु पुरुषः परमेश्वरं दृष्ट्वा संसारं तरति इह तु यः कश्चिद्गिरिमारुह्य भगवन्तं पश्यन्संसारं तरतीति व्यस्तरूपकेण तामेव तत्त्ववितर्तिमित्येवकारेण साहित्यादयत्नसाध्यत्वसूचकेन यद्ध्वन्यते तेन व्यतिरेकालंकारपर्यवसायीदमधिकरूपकम् ॥ ११ ॥

**नापारि लब्धुमरविन्दभुवापि साक्षा-**
**द्यं पूर्वमीश्वर विना हयमेधपुण्यम् ।**
**अन्यैरनाप्य स कथं तव पुण्यकोटिं**
**प्राप्यस्त्वदाकृतिविलोकनजः प्रमोदः ॥१२॥**

हे ईश्वर, पूर्वं साक्षादरविन्दभुवापि हयमेधपुण्यं विना यं प्राप्तुं नापारि न शक्तमासीत्, स तथाभूतः त्वदाकृतिविलोकनजः त्वद्रूपावलोकनप्रभवः प्रमोदः प्रकृष्ट आनन्दः

अन्यैस्तदितरैः पुण्यकोटिं भवद्विमानं सुकृतानां कोटिं च अनाप्य अलब्ध्वा कथं प्राप्यः? न कथंचिदपीत्यर्थः। अनाप्येत्यत्र आङ्पूर्वादाप्नोतेः क्त्वाप्रत्ययस्य ल्यबादेशो नञ्समासश्च। अत्र पुण्यकोटिशब्दश्लेषोत्थापितोऽर्थापत्तिरलंकारः। भगवद्दर्शनलिप्सया अनादिसिद्धे सत्यव्रतक्षेत्रे हयमेधेन भगवन्तमाराधयतो हिरण्यगर्भस्य उत्तरवेद्यां तस्मै दर्शनं दातुं भगवानाविर्भूत इति पौराणिकी कथा। तथोक्तं ब्रह्माण्डे विष्णुना– 'पुरा कृतयुगे राजञ्जम्बूद्वीपे तु दक्षिणे। भागे भारतवर्षे च क्षेत्रे सत्यव्रताभिधे॥ चैत्रे मासि सिते पक्षे चतुर्दश्यां तिथौ मुने। शोभने हस्तनक्षत्रे रविवारसमन्विते॥ वपाहोमे प्रवृत्ते तु प्रातःसवनकल्पिते। धातुरुत्तरवेद्यां तु प्रादुरासीज्जनार्दनः। आराधितो जगद्धात्रा हयमेधेन तद्गिरौ॥' इति॥ १२॥

**प्रत्यङ्मुखं तव गजाचलराज रूपं**
**प्रत्यङ्मुखाश्चिरतरं नयनैर्निपीय।**
**अस्थानमाप्तवचसामवितर्कणीय-**
**माश्चर्यमेतदिति निश्चयमावहन्ते॥ १३॥**

हे गजाचलराज, प्रत्यङ्मुखाः प्रत्यग्दृष्टयस्तत्त्वविदः प्रत्यङ्मुखं पश्चिमाशाभिमुखं तव रूपं दिव्यविग्रहम्। 'अथ

रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुःषु श्लोकशब्दयोः ॥' इति केशवः । चिरतरं नयनैर्निपीय बहुषु जन्मसु प्रार्थितं साक्षाद्भगवद्दर्शनं लब्धमित्यादरेण बहुं कालमवलोक्य एतद्रूपम् अस्थानमाप्तवचसामवितर्कणीयम् आप्तवाक्यैरनुमानैर्वा इदमित्थमिति निर्धारयितुमशक्यम् आश्चर्यं परं ब्रह्मेति निश्चयमावहन्ते निश्चिन्वन्तीत्यर्थः । आश्चर्यमिति सकलजगत्स्रष्टृत्वादिमाहिमशालि परं ब्रह्म भगवानुच्यते । अत एव हरिवंशे आश्चर्योपाख्याने श्रीकृष्णं प्रति नारदवचनम्— 'आश्चर्यं खलु देवानामेकस्त्वं पुरुषोत्तम । धन्यश्चासि महाबाहो लोके नान्योऽस्ति कश्चन ॥' इति । कठवल्लीषु च 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति परब्रह्मविषये वक्तृश्रोतृणामप्याश्चर्यत्वोक्त्या तस्यात्यन्ताश्चर्यत्वं कैमुतिकन्यायेन दर्शितम् । अत्र प्रत्यङ्मुखा इत्यनेन प्रत्यगाशाभिमुखा इत्यपि प्रतीयते । प्रत्यगाशाभिमुखः पुरुषः प्रत्यगाशाभिमुखैरन्यैः स्वाभिमुखतया न दृश्यते, तथापि तथा दृश्यमानं भगवद्रूपमत्याश्चर्यमिति निश्चिन्वन्तीति ततोऽर्थान्तरं लभ्यते । तस्मिन्नर्थेऽत्यन्तानुपपन्नमिदं कथमुपपादयितुं शक्यमित्येतदर्थत्वेन । चिरतरदर्शनं योजनीयम् । प्रकृतार्थे तु तृष्णातिरेकेणेति स्पष्टमेव । अत्राश्चर्यत्वे द्रष्टृदृश्ययोरुभयो-

रपि प्रत्यङ्मुखत्वं हेतुरिति श्लेषोत्थापितं पदार्थहेतुकं काव्य-
लिङ्गमलंकारः ॥ १३ ॥

**यस्मिन्नहात्यतिशयोक्तिरलंकृतित्वं**
**न्यूनोपमात्वमुपमा समुपैति सर्वा ।**
**सूक्ष्मस्वभावकलनापि च न प्रतर्क्या**
**तद्वर्णयामि भवतः कथमाभिरूप्यम् ॥**

भवतः आभिरूप्यं सौन्दर्यं तत्कथं वर्णयामि ? कथमपि वर्णयितुं न शक्नोमि । उक्तिवैचित्र्यं हि वर्णनम् । तत्र तावदतिशयोक्त्यलंकारेण संभवति । अतिशयोक्तिरसत्कल्पनया कविप्रौढोक्तिसिद्धया भवति । यथा— 'सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्' इति । इह यो यावानतिशयः स्वमत्या परिकल्पित इव स सर्वोऽपि वस्तुवृत्त एव भवेत् , तमप्यतिशयीत वेति नातिशयोक्तिरलंकृतित्वं भजते । ततो न्यूनकक्ष्या उपमा सर्वापि न्यूनत्वमयते । यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति' इति । क्वचिदप्युपमानाधिक्यासंभवादलंकाररूपोपमात्व न प्रवर्तते । स्वभावोक्तिमात्रमप्यत्र न संभवति । सूक्ष्मवस्तुस्वभाववर्णनं हि स्वभावोक्तिः । यथा— 'तौ संमुखं प्रचलितौ सविधे गुरूणां मार्गप्रदानरभसस्खलितावधानौ । पार्श्वोपसर्पणमुभावपि भिन्नदिक्कं कृत्वा मुहुर्मुहुरुपासरतां सलज्जम् ॥'

इति । इह परिदृश्यमानापि रूपसामग्री समुद्रवदप्रतर्क्या, कुतस्तत्र सूक्ष्मस्वभावावगतिरिति । अत्र वाक्यार्थत्रयहेतुकं काव्यलिङ्गमलंकारः ॥ १४ ॥

लक्ष्म्याः प्रियोऽसि रतिकेलिकृतः पितासि
विश्वैकमोहनरसस्य च देवतासि ।
आवासभूमिरसि सर्वगुणोत्तमानां
वैकुण्ठ वर्णयतु कस्तव रूपरेखाम् ॥१५॥

हे वैकुण्ठ, लक्ष्म्याः प्रियोऽसि श्रीमहालक्ष्म्याः स्वयंवरलब्धो वल्लभोऽसि । सा खलु सर्वोत्तमरूपशालिनी स्वानुगुणं पतिमन्विच्छन्ती सर्वान्देवान्परित्यज्य पुरुषोत्तममाससादेति पुराणादिषु प्रसिद्धिः । रतिकेलिकृतः स्मरस्य पुरुषेषु सर्वोत्तरसौन्दर्यतया प्रसिद्धस्य पितासि । पितापुत्रयोः सारूप्यं लोकप्रसिद्धम् । उक्तं चापस्तम्बेन— 'अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते चापि सारूप्यं देहत्वमेवान्यत्' इति । देह एवान्य इत्यर्थः । अथापि अपि चेत्यर्थः । विश्वस्य एकः प्रधानभूतो मोहनो यो रसः शृङ्गाररसः । 'शृङ्गारवीरकरुणाद्भुतहास्यरौद्रबीभत्सवत्सलभयानकशान्तनाम्नः । आम्नासिषुर्दश रसान्कवयो वयं तु शृङ्गारमेव रसनाद्रसमामनामः ॥ वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि

वटयक्षवदाविभाति। लोके गतानुगतिकत्ववशादुपेतामेतां निवर्तयितुमेष परिश्रमो नः ॥' इति भोजराजः। तस्य देवतासि। शृङ्गारस्य देवता विष्णुर्हास्यस्य भृङ्गिरिटिरित्यादि भरतशास्त्रविदो वदन्ति। सर्वगुणोत्तमानां सर्वेषां कल्याणगुणानामावासभूमिरसि। 'यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्याप्यसंख्येया महात्मनः॥ समस्तकल्याणगुणात्मकोऽसौ' इत्यादि मात्स्यवैष्णवपुराणादिषु प्रसिद्धतरमेतत्। 'प्रायो विरूपेषु भवन्ति दोषा यत्राकृतिस्तत्र गुणा वसन्ति' इति सामुद्रिकशास्त्रविदः। नैषधचरितेऽप्युक्तम्—'त्वदुदाहरणाकृतौ गुणा इति सामुद्रिकसारमुद्रणा' इति। एवंभूतस्य तव रूपरेखां सौन्दर्यस्य निरन्तरालपङ्क्तिं पादादिकेशान्तेषु सर्वेष्वप्यवयवसंस्थानविशेषेषु रूपस्य सौन्दर्यस्य निश्छिद्रतया सद्भावं को वर्णयतु? न कोऽपि वर्णयितुं शक्त इत्यर्थः। 'रेखा त्वकृत्रिमे मार्गे हस्तपादतलादिषु। निरन्तरालपङ्क्तौ च वदन्ति विदितागमाः॥' इति केशवः। अत्रापि पूर्ववत्काव्यलिङ्गमेवालंकारः॥ १५॥

**सर्वोत्तरोऽसि सकलत्रिदशाश्रयोऽसि**
**ज्योतिश्छटाघटितचक्रपरिष्कृतोऽसि।**
**शृङ्गारशेवधिरसि द्विपशैलमौले**
**कल्याणरूप इति कस्त्वयि चित्रवादः॥**

हे द्विपशैलमौले । 'मौलिः किरीटे धम्मिल्ले' इत्यभिधानकोशः । किरीटवच्छिरो भूषयतीति तथात्वाध्यवसायरूपातिशयोक्तिः । कल्याणरूपः सर्वजनहृदयहारितया शोभनरूपः स एवाक्षीणसुवर्णरूप इति त्वयि कश्चित्नवादः आश्चर्यवादः ? नेदमाश्चर्यमित्यर्थः । 'कल्याणस्तूत्सवे क्लीबं मङ्गलाक्षयरुक्मयोः' इति केशवः । श्लेषेणाध्यवसिताक्षयस्वर्णरूपत्वस्योपपादनार्थं तदितरमहामेरुगुणगणसद्भावः श्लेषेण प्रदर्श्यते— सर्वोत्तरः सर्वाधिकोऽसि । मेरुरपि तथा, 'सर्वेषामुत्तरो मेरुः' इति वचनात् । सूर्याभिमुखस्य सव्यभागस्था उत्तरा भवन्ति । मेरुं प्रदक्षिणीकुर्वाणः सूर्यो यत्पार्श्वस्थेन पुरुषेणाभिमुखेन निरीक्ष्यते तस्य सर्वस्यापि महामेरुः सव्यभागस्थ एव भवतीति तस्य सर्वोत्तरत्वम् । सकलत्रिदशाश्रयोऽसि सर्वेषां देवानां रक्षकतया भगवानाश्रयः, मेरुरावासतया । ज्योतिश्छटया तेजोनिकरेण घटितं यच्चक्रं सुदर्शनं तेन परिष्कृतोऽलंकृतो भवान्, मेरुस्तु आदित्यादिज्योतिःसमूहघटितेन ज्योतिश्चक्रेण परिवृतः । शृङ्गारस्य शेवधिर्भवान् । मेरुस्तु शृङ्गमृच्छन्तीति शृङ्गाराः । कर्मण्यण् । तथाभूताः शेवधयो महापद्मादिनिधयो यस्येति शृङ्गारशेवधिः । मेरोर्मध्ये चतुर्मुखस्य पुरी, तां पुरीं परितो लोकपालानामष्टौ पुर्य इति पौराणिकी प्रसिद्धिः । तदन्तर्गते तत्र कुबेरावासे पद्ममहापद्मा-

दिसद्भावः । निधिसामान्यविवक्षायां तु तत्सद्भावः सूपपादः । अत्र सर्वोत्तर इत्याद्यभङ्गश्लेषेण शृङ्गारेति सभङ्गश्लेषेण चोत्थापितमनेकपदार्थहेतुकं काव्यलिङ्गमलंकारः ॥ १६ ॥

**अङ्गानि ते निखिललोकविलोचनानां**
**संभावनीयगुण संसरणानि सत्यम् ।**
**येष्वेकमाप्य न पुराधिगतं स्मरन्ति**
**वाञ्छन्ति नान्यदपि लब्धुमदो विहाय ॥**

हे संभावनीयगुण सकललोकश्लाघ्यकल्याणगुणनिकर, ते तव अङ्गानि सकललोकविलोचनानां देवमनुष्यादिसर्वजननयनानां संसरणानि नित्यसंचरणार्था महामार्गाः । 'घण्टापथः संसरणम्' इत्यमरः । संसरणानीत्यनेन संसारा जन्मभेदा इत्यपि प्रतीयते । तमर्थं परिगृह्योच्यते—सत्यं संसरणानीत्येतत्साम्प्रतम् । कुतः? येष्वङ्गेषु क्रमेण दृश्यमानेषु एकमवाप्य प्राप्य पुराधिगतं पूर्वदृष्टमङ्गं न स्मरन्ति, लोकविलोचनानीति शेषः । अदो विहाय अन्यदपि लब्धुं दृश्यमानमङ्गं विहायाङ्गान्तरमपि द्रष्टुं न वाञ्छन्ति । तत्तदङ्गदर्शनजनितपरमानन्दनिमग्नत्वात्पूर्वदृष्टाङ्गविस्मरणमङ्गान्तरदर्शनानभिलाषश्चेति प्रत्यवयवं सौन्दर्यातिशयाभिव्यक्तिः । संसारस्याप्ययं स्वभावः यदेकं जन्म प्राप्तः प्राचीनं जन्म न स्मरति

उत्कृष्टमपि जन्मान्तरं नाभिलषतीति । अत्र प्रातीतिकस्यार्थस्य प्रकृतार्थे उपमानत्वेनान्वयस्यावश्यंभावादुपमा । अङ्गानि संसरणानीत्यत्र व्यस्तरूपकम् । रूपकोपमयोरङ्गाङ्गिभावसंकरः ॥ १७ ॥

**एकत्र मन्मथमजीजनदिन्दिरायां**
**पूर्वं भवानिति बुधाः किमपूर्वमाहुः ।**
**अद्यापि तं न जनयस्यरविन्दनाभ**
**कासु प्रसन्नमधुरस्मित कामिनीषु ॥**

हे अरविन्दनाभ, एकत्र एकस्यामिन्दिरायां लक्ष्म्यां पूर्वं भवान् मन्मथमजीजनदिति बुधाः पुराणविदः किमपूर्वमाहुः? तच्चित्रं न भवति । अद्यापि कासु कामिनीषु तं रतिभावाभिन्नत्वेनाध्यवसितं मन्मथं न जनयसि? सर्वास्वपि कामिनीषु जनयस्येव । मधुरस्मितेति विशेषणम् । कामिनीनामुद्दीपनमुद्दिश्य क्रोधेष्वपि स्मितमस्ति । तन्न प्रसन्नम । तद्व्यावृत्त्यर्थं प्रसन्नविशेषणम । मधुराकृतिगर्भत्वेन कामिनीनां हृदयेषु रतिभावोत्पादनमेव मन्मथजनकत्वेनाध्यवसितमित्यातिशयोक्त्यानुप्राणितं काव्यलिङ्गमलंकारः ॥ १८ ॥

**निक्षिप्य हृत्त्वयि पुनर्लभते न कोऽपि**
**निर्यात इत्यधिप न त्वयि चित्रमेतत् ।**

**हृत्वा हठान्मृगदृशां हृदयानि यस्त्व-**
**मेवं निलीय किल तिष्ठसि शैलशृङ्गे ॥**

हे अधिप प्रभो, त्वयि हृत् हृदयं निक्षिप्य निर्यातो मुक्तः। प्रस्थित इत्यपि प्रतीयते। 'निर्याणं त्वचि हस्तिनः। नेत्रान्ते निर्गमे मोक्षे मरणे च प्रकीर्तितम् ॥' इति केशवः। पुनर्न लभते त्वयि निक्षिप्तं हृदयं पुनर्न प्राप्नोति। षोडशकलाप्रलयेन मुक्तो भवतीत्यर्थः। कश्चिद्विस्रम्भेण स्वकीयं धनं निक्षिप्य देशान्तरं प्रस्थितेन कालान्तरे पुनस्तत्प्राप्तव्यं हि। इह तत्प्राप्त्यभावोक्त्या देवस्य परकीयस्वापहारकत्वं प्रतीयते। तत्तदीयसौन्दर्यातिशयाभिव्यञ्जकेन वाक्यार्थेनोपपादयितुमुत्तरार्धम्। यस्त्वं मृगदृशां हृदयानि हठाद्बलात्कारेण। 'हठः पाष्ण्यां बलात्कारे जलोद्भवतृणान्तरे। वारिपर्णसमाख्ये च' इति केशवः। हृत्वा एवं मया मनसि भाव्यमानेन प्रकारेण शैलशृङ्गे निलीय तिष्ठसि, स कथं निक्षिप्तं दद्या इति भावः। अत्र कामिनीमनसां वशीकरणमेव तदीयस्वहरणत्वेनाध्यवसितमित्यतिशयोक्तिः। अन्त्यकाले भगवत्स्मरणमेव तत्र हृदयनिक्षेपणत्वेनाध्यवसितमिति तत्राप्यतिशयोक्तिः। एवमतिशयोक्तिभ्यामुत्थापितं काव्यलिङ्गमलंकारः ॥ १९ ॥

**मोहं जगत्त्रयभुवामपनेतुमेत-**
**दादाय रूपमखिलेश्वर देहभाजाम् ।**
**निःसीमकान्तिरसनीरधिनामुनैव**
**मोहं विवर्धयसि मुग्धविलोचनानाम् ॥**

हे अखिलेश्वर सर्वेषामपि देवमनुष्यादीनां स्वामिन् । स्वामी खलु स्वभूतानामनिष्टनिवारणार्थं प्रवर्तते यथा गोपो गवाम् । अतः स्वामी त्वं जगत्त्रयभुवां लोकत्रयसंभूतानां देहभाजां मोहं संसारकारणमज्ञानमपनेतुम् एतद्रूपमिमं शुभ-विग्रहमादायाङ्गीकृत्य निःसीमकान्तिरसनीरधिना उद्वेलस्य लावण्यरूपस्य रसस्य आस्वादनीयस्य जलस्य च नीरधिना समुद्रेण अमुनैव रूपेण मुग्धविलोचनानां वामाक्षीणां मोहं रागातिशयकृतं वैचित्त्यं विवर्धयासि प्रवृद्धं करोषि । अत्र मोहापायकारणतयोपात्तेनैव रूपेण मोहः संवर्ध्येत इत्यसंगति-विशेषोऽलंकारः । 'अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा । गोत्रोद्धृत्यै किरिर्भूत्वा गोत्रोद्भेदं हरेऽकरोः ॥' इति तल्लक्ष-णोदाहरणे । सेत्यसंगतिः प्राक्प्रकृतोच्यते । हे हरे, त्वं गोत्रोद्धृत्यै भूमेरुद्धरणाय किरिः श्रीवराहो भूत्वा गोत्रोद्भेदं खुरकुट्टनैः पर्वतानां दलनमकरोरित्युदाहरणार्थः । स च श्लेषोत्थापितः । मोहयोः संसारमूलाज्ञानरागप्रयुक्तसात्त्विक-

भावभेदरूपप्रलयाख्यविकाररूपयोरभेदाध्यवसायरूपयातिशयोक्त्या तयोः संकरः । 'रसो रागे जले वीर्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥' इति शब्दरत्नाकरः ॥ २० ॥

**उच्छेदमेकविषयात्कथयन्ति बोधा-**
**न्मोहस्य ये खलु कथं न मृषावदास्ते ।**
**लावण्यमीश तव यन्नयनैर्निपीय**
**तत्रैव मोहमधिकं दधते तरुण्यः ॥ २१ ॥**

एकविषयात्समानविषयाद्बोधाज्ज्ञानात् मोहस्य उच्छेदं विनाशं ये कथयन्ति ते कथं न मृषावदाः? मृषावदा इत्युचितमेव । हे ईश, यद्यस्मात्कारणात् तरुण्यः तव लावण्यं चाकचक्यरूपं देहकान्तिविशेषम् 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणं नयनैर्निपीय अत्यादरेण दृष्ट्वा तत्रैव तस्मिन्नेव लावण्ये अधिकं मोहं कारणे कार्योपचारान्मोहहेतुमनुरागं दधते । अत्रापि मोहयोरभेदाध्यवसायरूपातिशयोक्तिः । मृषावदा इत्यत्र प्रपञ्चमिथ्यात्ववादस्यानृतवादत्वाध्यवसायरूपातिशयोक्तिः । निपीयेत्यत्र वीक्षणे तृष्णातिशयकृतपानत्वाध्यवसायकृतातिशयोक्तिः । एतेषां संकरः । उत्तरवाक्यार्थस्य

पूर्ववाक्यार्थे हेतुत्वेनान्वयेऽपि न काव्यलिङ्गमलंकारः। यत्र हेतुत्वमार्थं तत्र काव्यलिङ्गम्, यत्र तच्छाब्दं तत्र न काव्यलिङ्गम् 'नागेन्द्रहस्तास्त्वचि कर्कशत्वात्' इत्यादाविति खल्वालंकारिकमर्यादा ॥ २१ ॥

**शुभ्रांशुवक्त्र शुभगोचरलाभतोषा-**
**त्संप्रस्थितो मृगदृशां नयनाम्बुजौघः ।**
**त्वद्भाःसरित्यथ निपत्य बिभर्ति मोहं**
**प्रायः फलन्ति विफलन्ति च दैवचिन्ताः॥**

हे शुभ्रांशुवक्त्र चन्द्रमुख, शुभगोचरलाभतोषात् अतिमनोहरविषयलाभसंतोषात् संप्रस्थितः संभूय युगपत्प्रस्थितः मृगदृशां नयनाम्बुजौघः नयनान्येवाम्बुजानि तेषामोघः समूहः। 'ओघो बृन्देऽम्भसां रये' इत्यमरः। अथ प्रस्थानानन्तरमेव त्वद्भाःसरिति तव लावण्यकान्तिरेव सरित् तस्यां निपत्य मोहं वैचित्त्यमनुरागातिशयप्रयुक्तं बिभर्ति दधाति। शुभ्रांशुर्वक्त्रं यस्येति व्युत्पत्त्या चन्द्ररूपस्य भगवन्मुखस्य प्रभानिकरे पतितानामम्बुजानां निमीलनरूपं वैचित्त्यं युक्तमिति भावः। इहार्थान्तरमपि प्रतीयते। ग्रहाणां स्थानविशेषस्थितिप्रयुक्तमानुकूल्यं प्रातिकूल्यं च गोचर इति दैवज्ञानां व्यवहारः। ते च शुभगोचरेषु 'भानौ कुलीरालि-

झषैर्विमुक्ते—' इति । तथैव स्त्रीणां नयनौघः शुभगोचरो लब्ध इति हर्षात्संप्रस्थितः । तदनन्तरमेव क्वचिन्नदीप्रवाहे निपत्य मूर्छितो जात इति । 'मोहः पुनः स्यादज्ञाने मूर्छायां क्रोध एव च' इति केशवः । अस्मिन्नर्थे अर्थान्तरं न्यस्यति—दैवचिन्ताः दैवं शुभाशुभं कर्म तस्य चिन्ताः तत्सूचकग्रहचारादिविचारा दैवज्ञैः कृताः प्रायः फलन्ति क्वचिद्विफलन्ति च । इह प्रकृतार्थे शुभ्रांशुवक्त्रेति नयनाम्बुजेति च रूपकयोः प्रस्तुतमोहाभेदेनाध्यवसिते निमीलने उपकारकत्वात्तस्यताभ्यां संकरः । अप्रकृतार्थे तु त्वद्भ्रूःसरितीति रूपकस्य विषयसौन्दर्याकृष्टनयनसंबन्धे निपतनाध्यवसायरूपातिशयोक्तेर्मोहगोचरशब्दश्लेषमूलातिशयोक्त्योश्चार्थान्तरन्यासोपकारकत्वात्तस्य तैः संकरः ॥ २२ ॥

**यत्प्राणसंयमजुषां यमिनां मनांसि**
**मूर्तिं विशन्ति तव माधव कुम्भकेन ।**
**प्रत्यङ्गमूर्छदतिवेलमहाप्रवाह-**
**लावण्यसिन्धुतरणाय तदित्यवैमि ॥**

हे माधव लक्ष्मीपते, प्राणसंयमजुषां प्राणायामं सेवमानानां यमिनां योगिनां मनांसि तव मूर्तिं कुम्भकेन पूरककुम्भकरेचकानां मध्ये कुम्भकाख्यावस्थाविशेषेण विशन्ति

तद्ध्यानप्रवृत्तानि भवन्ति इति यत् । कुम्भकेन विशन्तीत्युक्ते घटरूपेण साधनेन प्रविशन्तीत्यपि प्रतीयते । तदनूद्य फलोत्प्रेक्षार्थमुत्तरार्धम् । प्रत्यङ्गं तव सर्वेष्वप्यवयवेषु मूर्छन् प्रसरन् अतिवेलः मर्यादामतिक्रम्य वर्तमानः महाप्रवाहो यस्य तथाभूतस्य लावण्यसिन्धोस्तरणाय तदित्यवैमीत्युत्प्रेक्षा । 'नाभिचक्रस्थितं ध्यायेत्पूरकेण पितामहम् । हृदयाब्जगतं ध्यायेत्कुम्भकेन जनार्दनम् । ललाटस्थं शिवं ध्यायेद्रेचकेन महेश्वरम् ॥' इति हि स्मृतिः । तदिह भगवद्ध्यानसमये पदकमलादि कुन्तलपर्यन्तेष्ववयवेषु क्रमेण ध्यातव्येषु तत्तदङ्गप्रवहल्लावण्यतटिनीतरणं कुम्भकावलम्बनस्य फलत्वेनोत्प्रेक्षितम् । सा चोत्प्रेक्षा कुम्भकशब्दश्लेषेण लावण्यसिन्ध्विति रूपकेण चोत्थापितेति संकरः ॥ २३ ॥

**लावण्यसागरभुवि प्रणयं विशेषा-**
**द्दुग्धाम्बुराशिदुहितुस्तव तर्कयामि ।**
**यत्तां बिभर्षि वपुषा निखिलेन लक्ष्मी-**
**मन्यां तु केवलमधोक्षज वक्षसैव ॥ २४ ॥**

हे अधोक्षज । अधःकृतान्यक्षाणि यैस्ते अधोक्षा जितेन्द्रियाः तेषु जायते अभिव्यज्यत इत्यधोक्षजो भगवान् । दुग्धाम्बुराशिदुहितुः लक्ष्म्याः लावण्यसागरभुवि लावण्यमेव

सागरः तत्प्रभवायां लक्ष्म्यां तव विशेषाद्विशिष्य अधिकं प्रणयं तर्कयामि । तत्र हेतुः— तां लावण्यसागरभुवं लक्ष्मीं निखिलेन कृत्स्नावयवयुक्तेन वपुषा बिभर्षि । अन्यां दुग्धाम्बुधिदुहितरं तु लक्ष्मीं केवलं वक्षसैव बिभर्षीति यत् । अत्र लावण्यस्य सागरत्वेन रूपणात्तत्प्रभवायां शोभायां तत्कन्यकात्वारोपो गम्यत इत्येकदेशविवर्तिरूपकालंकारः । न च लावण्यसागरेत्यत्र लावण्यमेव सागर इति रूपकसमासं विहाय लावण्यं सागरमिवेत्युपमितसमासाश्रयणे समासोक्तिरपि संभवतीति वाच्यम् , दुग्धाम्बुराशिप्रतिकोटितासिद्ध्यर्थं सागरप्राधान्याय मयूरव्यंसकादिसमासस्याश्रयणीयत्वात् ॥२४॥

**सारस्वतं वदनपद्मभुवं प्रवाहं**
**त्रैस्रोतसं च तव पादभुवं निरीक्ष्य ।**
**सर्वप्रतीकनिकरात्प्रवहन्त्यजस्र-**
**मीर्ष्यावतीश यमुना किमु कायकान्तिः ॥**

हे ईश ईश्वर, तव कायकान्तिः सारस्वतं सरस्वतीसंबन्धिनं प्रवाहं तव वदनपद्मभुवं त्रैस्रोतसं गङ्गासंबन्धिनं प्रवाहं तव पादभुवं च निरीक्ष्य ईर्ष्यावती अक्षमावती तयोर्भवदङ्गप्रभवत्वकृतमुत्कर्षं सोढुमशक्नुवती ताभ्यां स्वस्या अत्युत्कर्षार्थं तव सर्वप्रतीकनिकरात् सर्वेषामवयवानां समू-

ह्लात् अजस्रं प्रवहन्ती यमुना किम्विति स्वरूपोत्प्रेक्षा । सा च वाग्गुम्भ एव सरस्वत्या नद्याः प्रवाह इति तदुभयाभेदाध्यवसायरूपातिशयोक्त्या उत्थापितेति तयोः संकरः । वदनं पद्ममिवेत्युपमया तु तयोः संसृष्टिः ॥ २५ ॥

**आपूरितत्रिभुवनोदरमंशुजालं**
**मन्ये महेन्द्रमणिबृन्दमनोहरं ते ।**
**त्वद्रागदीपितहृदां त्वरितं वधूनां**
**प्राप्ते सरित्सहचरं प्रलयेऽभिवृद्धम् ॥**

आपूरितं त्रिभुवनस्योदरमन्तरालं येन तत्तथा महेन्द्रमणिबृन्दमिव इन्द्रनीलरत्नसमूहमिव मनोहरं तवांशुजालं देहप्रभानिकरं त्वद्रागेण त्वद्विषयानुरागेण दीपितहृदां वह्निनेवासह्येन प्रदीपितहृदयानां वधूनां तरुणीनां प्रलये 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादश्च वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥' इत्युक्तानां सात्त्विकभावानां मध्ये 'प्रलयो नष्टचेष्टता' इत्युक्तलक्षणे प्रलयाख्ये विकारे प्राप्ते सति त्वरितमभिवृद्धं सरित्सहचरं समुद्रं मन्ये । प्रलये कल्पान्ते समुद्रस्य ध्रुवलोकपर्यन्तत्रैलोक्यव्यापिन्यभिवृद्धिर्भवत्येवेति भावः । अत्र प्रलयशब्दश्लेषोत्थापितातिशयोक्त्या

आपूरितत्रिभुवनोदरमिति कविप्रौढोक्तिकल्पितातिशयोक्त्या चोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ २६ ॥




युक्त्यागमेन च भवाञ्शशिवर्ण एव
निष्कृष्टसत्त्वगुणमात्रविवर्तमूर्तिः ।
धत्ते कृपाम्बुभरतास्त्विषमैन्द्रनीलीं
शुभ्रोऽपि साम्बुरसितः खलु दृश्यतेऽब्दः ॥

निष्कृष्टस्य रजस्तमोभ्यां व्यावर्तितस्य सत्त्वगुणमात्रस्य विवर्तो घनीभावरूपा मूर्तिर्यस्य स तथाभूतो भवान् युक्त्या केवलसत्त्वमयत्वयुक्त्या आगमेन आप्तवचनेन च शशिवर्ण एव । प्रसिद्धं हि शिवराघवसंवादस्थम् ‘ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्’ इति वचनम् । ‘ तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः । शेतेऽशेषजगत्सूतिः शेषाहिशयने हरिः ॥’ इति यत्कूर्मपुराणवचनं तत्रापि पुण्डरीकदलद्युतिरित्यनेन शुभ्रवर्णत्वमेव विवक्षितम्, पुण्डरीकशब्दस्य सिताम्भोजे वैशेषिकनामत्वस्यापि सत्त्वात्, ततः प्राक् ‘ शाकद्वीपं समाश्रित्य’ इति श्वेतद्वीपवर्णनं प्रस्तुत्य ‘ तत्र पुण्या जनपदा नानाश्चर्यसमन्विताः । श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ॥’ इति तत्रत्यानां सर्वेषामपि शुभ्रवर्णतयोक्तत्वाच्च । वामनपुराणे च गजेन्द्रमोक्षाध्याये गजेन्द्रानुसंहितभगवद्रूपप्रतिपादकं वच-

नम्— ‘ मथितामृतफेनाभं शङ्खचक्रगदाधरम् । सहस्रशुभनामानमादिदेवमजं विभुम् ॥ ’ इति । हरिवंशेऽपि घण्टाकर्णध्यानविषयभगवद्रूपप्रतिपादकं वचनम्— ‘ ध्यायन्विष्णुं जगद्योनिं विष्णुं पीताम्बरं शिवम् । कुन्दाभमादिपुरुषमेकाकारमनामयम् ॥ ’ इति । एवं शशिवर्णोऽपि भगवान् कृपाम्बुभरतः कृपैवाम्बु शीतलत्वाद्भक्तजनतृष्णानिवर्तकत्वाच्च तस्य भरतः भरेणातिशयेन गरिम्णा वा । ‘ भरस्त्वतिशये भारे भरणे गरिमण्यपि ’ इति केशवः । ऐन्द्रनीलीमिन्द्रनीलसंबन्धिनीं त्विषं कान्तिं धत्ते । स्वतः शुभ्रोऽपि खल्वब्दो मेघः साम्बुरम्बुभरितः सन्नसितो दृश्यते । अत्र भगवतः स्वतो मेघवर्णमूर्तिसहस्रसद्भावेऽपि कविप्रौढोक्तिकल्पितेयं सरणिः । अत्र कृपाम्बुभरत इति रूपकोत्थापितः प्रतिवस्तूपमालंकारः । प्रतिवस्तु प्रतिवाक्यार्थम् उपमानवाक्ये उपमेयवाक्ये च उपमा समानधर्मोऽस्यामस्तीति प्रतिवस्तूपमा । इह नैर्मल्यगुणरूपो भगवद्वलाहकयोः समानधर्मो वाक्यार्थद्वयेऽपि पृथङ्निर्दिष्ट एव । सा च प्रतिवस्तूपमा कृपाम्बुरूपरूपकोत्थापितेति संकरः । ऐन्द्रनीलीं त्विषं धत्त इत्यत्रासंभवद्वस्तुसंबन्धनिबन्धनो निदर्शनालंकारः । इन्द्रनीलसंबान्धिनी हि कान्तिर्भगवत्यसंभवन्ती तत्सदृशकान्तिमत्तामवगमयति । अनेन निदर्शनालंकारेण प्रतिवस्तूपमालंकारस्य संसृष्टिः । ‘ पदार्थवृत्तिमप्येके वदन्त्य-

न्यां निदर्शनाम् । त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥' इति तल्लक्षणोदाहरणे ॥ २७ ॥

**सर्वातिशायिसहजद्युतिभूषितस्य**
**विश्वैकनायक विभूषणधारणं ते ।**
**आबद्धसौहृदमपारसुखाम्बुराशे-**
**र्वीक्षे तवैव विषयादिकुतूहलेन ॥ २८ ॥**

हे विश्वैकनायक विश्वस्यैकाधिपते, सर्वातिशायिन्या सहजया स्वभावसिद्धया द्युत्या प्रभया भूषितस्य ते विभूषणधारणम् अपारसुखाम्बुराशेः नित्यनिरतिशयानन्दमहार्णवस्य तवैव विषयादिकुतूहलेन तुच्छगोपकन्यारमणादिकौतुकेन आबद्धसौहृदं कृतसौहार्दं समानं वीक्षे पश्यामि । अत्रोपमालंकारः, सौहृदादिशब्दानां सादृश्यपर्यवसायित्वस्य दण्ड्यलंकारादिषूक्तत्वात् । सहजकान्त्या यावती शोभा तावती विभूषणभाभिर्नास्तीति व्यतिरेकालंकार उपमालंकारेण व्यज्यते ॥

**मध्ये स्फुरन्मकरतोरणमण्डलस्य**
**चामीकराभरणभूषितसर्वगात्रः ।**
**आदित्यबिम्बगतमा प्रपदात्सुवर्ण**
**भासा भवाननुकरोति भवन्तमेव ॥**

अर्चाविग्रहाणां शोभार्थं निहितः पार्श्वद्वयमुपरिप्रदेशं च

परिष्कुर्वन्यन्त्रविशेषस्तोरणः । तदभिप्रायेणोक्तं शब्दरत्नाकरे— ‘तोरणोऽस्त्री बहिर्द्वारदारुयन्त्रविशेषयोः’ इति । स तु पार्श्वद्वये मकरमत्स्याङ्कितो मकरतोरणः । स इह जाम्बूनदमयो विवक्षितः । तन्मण्डलस्य मध्ये स्फुरन् भासमानः, चामीकराभरणैः सुवर्णभूषणैः भूषितसर्वगात्रः भूषितसर्वावयवः भवान् आदित्यबिम्बगतम् आ प्रपदात् आ पादाग्रात् सुवर्णं हिरण्मयं भवन्तमेव भासा अनुकरोति । ‘य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः’ इत्युपनिषत्प्रसिद्धादित्यमण्डलसंनिहितमूर्तिस्त्वमिव वर्तस इत्यर्थः । अत्रोपमानोपमेययोरभेदेऽपि ‘गगनं गगनाकारम्’ इत्यत्रेव नानन्वयः, एकत्रादित्यमण्डलादि अन्यत्र मकरतोरणादीत्युपमानोपमेययोर्बिम्बप्रतिबिम्बभावापन्नधर्मभेदात् । किं तु ‘उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् । स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥’ इत्यत्रेव धर्मभेदेनोपमानोपमेयधर्मकल्पनयोपमालंकारः ॥ २९ ॥

**सेवारसागतसुराद्यनुबिम्बदृश्यं**
**भूषामणिप्रकरदर्शितसर्ववर्णम् ।**
**त्वां विश्वरूपवपुषेव जनं समस्तं**
**पश्यामि नागगिरिनाथ कृतार्थयन्तम् ॥**

हे नागगिरिनाथ, सेवारसेन सेवितुमिच्छया आगतानां सुरादीनामनुबिम्बैः प्रतिबिम्बैः दृश्यं दर्शनीयम्, भूषामणीनां प्रकरेण दर्शिताः सर्वे वर्णा अरुणिमादयो येन तं त्वां विश्वरूपवपुषा समस्तं सेवार्थमागतं जनं कृतार्थयन्तमिव पश्यामि उत्प्रेक्षे। विश्वरूपविग्रहे 'पश्यामि देवांस्तव देव देहे' इत्यादिना देवर्षिप्रभृतीनां दर्शनमुक्तम्। 'नानावर्णाकृतीनि च' इति सर्ववर्णत्वमप्युक्तम्। बृहदारण्यकेऽपि 'तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रकोपो यथा ह्यर्चिर्यथा पुण्डरीकम्' इति तस्य सर्ववर्णत्वमुक्तम्। एवं प्रतिबिम्बरूपसकलदेवतादिसत्त्वेन सर्ववर्णसत्त्वेन च निमित्तेनास्य भगवद्विग्रहस्य सकलजनकृतार्थीकरणार्थदर्शितविश्वरूपविग्रहत्वोत्प्रेक्षणात्फलोत्प्रेक्षागर्भः स्वरूपोत्प्रेक्षालंकारः। 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति पार्थदृष्टस्य तस्य विश्वरूपविग्रहस्य सर्वदृश्यत्वाभाव उक्तः। 'न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥' इति भगवता दिव्यचक्षुषैव तस्य दृश्यत्वमुक्तम्। तस्यैवात्र भगवता लोकानुग्रहार्थं सकलजनदृश्यत्वसंपादनेन पार्थदृष्टपूर्वावस्थातो वैषम्योद्घाटनाद्व्यतिरेकालंकारश्चेति तद्गर्भितश्चायं स्वरूपोत्प्रेक्षालंकारः। कृतार्थयन्तमित्यत्र 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः, 'अर्जे-

यन्वसति' इत्यत्रेव फलस्य हेतुत्वविवक्षणात्कृतार्थीकरणस्य फलत्वलाभः ॥ ३० ॥

श्रृङ्गीसुवर्णरुचिपिञ्जरितैकभागा-
न्यङ्गेषु देव तव भूषणमौक्तिकानि ।
प्रत्यक्षयन्ति भवतः प्रतिरोमकूप-
विश्रान्तसान्द्रजगदण्डसहस्रशोभाम् ॥

हे देव, तवाङ्गेषु श्रृङ्गीसुवर्णमलंकाररूपेण गृह्यमाणं सुवर्णम् । 'अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः' इत्यमरकोशः । यद्यपि भट्टबाणेन 'वर्षसमूहमिवान्तःस्थितापरिमाणशृङ्गिहेमकूटम्' इति राजकुलं विशेषयता शृङ्गिहेमेति ह्रस्वान्तश्रृङ्गिशब्दः प्रयुक्तः, तथाप्युदाहृते अमरकोशे, 'अलंकारसुवर्णं तु शृङ्गीकनकमाशु च' इति वैजयन्त्याम्, 'आशु पाटलसंज्ञे च व्रीहिभेदे दिवाकरे । अलंकारसुवर्णे च स शृङ्गीकनकाह्वयः ॥' इति केशवकोशे च दीर्घपाठात् तदनुरोधादत्र शृङ्गीसुवर्णेति दीर्घान्तप्रयोगः । तस्य भासा पिञ्जरितः पीतवर्णतां प्रापितः । शुद्धसुवर्णत्वेन पीतिमातिशयख्यापनाय पीतरक्तवाचिनः पिञ्जरशब्दस्य प्रयोगः । 'पिञ्जरः पीतरक्तः स्यात्' इत्यमरशेषः । एवंभूतः एकभागो येषां तानि भूषणानां मौक्तिकानि भवतः प्रतिरोमकूपं विश्रान्तानां सान्द्राणां च

जगदण्डानां ब्रह्माण्डानां यानि सहस्राणि । असंख्यानि ब्रह्माण्डानीति यावत् । 'ब्राह्मणशतं भोज्यताम्' इतिवदर्थतः संख्येयप्राधान्यम् । 'सहस्रं पुनरस्त्री स्याच्छतानां दशके तथा । बहून्यपि' इति केशवः । तेषां शोभां तत्कृतां शोभां प्रत्यक्षयन्ति । भगवति महाविराड्रूपे प्रसिद्धा प्रतिरोमकूपविश्रान्तानेककोटिब्रह्माण्डता अत्र भगवति प्रत्यक्षं दृश्यत इत्यर्थः । अत्र भूषणमौक्तिकैर्भगवन्मूर्तिसंलग्नानेककोटिब्रह्माण्डदर्शनमशक्यसंपादनं संपादितमित्यशक्यवस्त्वन्तरकरणरूपो विशेषालंकारः । तस्य पिञ्जरितेति तद्गुणेन संकरः । यद्यपि ब्रह्माण्डस्याधः कपालं रजतमूर्ध्वकपालं सुवर्णम् 'असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशेत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौः' इति श्रुतेः । इह तु केषांचिन्मौक्तिकानामधोभागास्तिर्यग्भागो वा सुवर्णसवर्णः । तथापि 'इतीदृशानामण्डानां कोट्यो ज्ञेयाः सहस्रशः । सर्वगत्वात्प्रधानस्य तिर्यगूर्ध्वमधः स्थिताः ॥' इति वचनात्केषांचिदूर्ध्वाधरीभावव्यत्यासेऽपि न विरोधः । 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः । पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥' इति तद्गुणालंकारस्य लक्षणोदाहरणे ॥ ३१ ॥

आबद्धपङ्क्तिमहितानि तव त्रिधाम-
न्वीध्राणि हीरशकलानि विभूषणेषु ।
संमोहनानि सरसीरुहलोचनानां
मन्त्राक्षराणि कलये मकरध्वजस्य ॥

हे त्रिधामन् विष्णो । 'त्रिधामा केशवेऽनले' इति यादवप्रकाशः । त्रीणि श्वेतद्वीपादीनि धामानि स्थानानि यस्येति व्युत्पत्तिमाहुः । हरिवंशे तु कैलासयात्रायाम् 'ब्रह्मा त्वं सृष्टिकाले तु स्थितौ विष्णुरसि प्रभो । संहारे रुद्रनामासि त्रिधामा त्वमतः प्रभो ॥' इति प्रकारान्तरेण व्युत्पत्तिर्दर्शिता । तव विभूषणेषु आ समन्ताद्बद्धाभिर्विरचिताभिः पङ्क्तिभिर्महितानि पूजितानि । मनोहराणीति यावत् । वीध्राणि विमलानि । 'वीध्रं तु विमलार्थकम्' इत्यमरः । हीरशकलानि वज्रखण्डानि सरसीरुहलोचनानां सरोजदृशां तरुणीनां संमोहनानि वशीकरणार्थानि मकरध्वजस्य मन्मथस्य मन्त्राक्षराणि कलये मन्ये इति स्वरूपोत्प्रेक्षा ॥ ३२ ॥

आपादमौलि विधृतेषु विभान्ति देव
स्थूलेन्द्रनीलमणयो मणिभूषणेषु ।
रागादुपेत्य तव सुन्दर तत्तदङ्ग-
लग्नानि लोकसुदृशामिव लोचनानि ॥

हे देव सुन्दरेति च संबोधनद्वयम् । तव आपादमौलि आपादमामौलि च विधृतेषु माणिभूषणेषु मणिमयेषु भूषणेषु प्रत्युप्ताः स्थूलेन्द्रनीलमणयः रागादुपेत्य समागत्य तत्तदङ्गे लग्नानि यत्र यत्राङ्गे प्रथमं पतितानि तत्र तत्रैव लग्नानि लोकसुदृशां त्रैलोक्यसुन्दरीणां लोचनानीव विभान्तीति स्वरूपोत्प्रेक्षा ॥

**त्वां वीक्ष्य मुक्तिद जनास्तरणिं सखायं**
**भिन्द्युः किलेति तव भूषणपद्मरागाः ।**
**शङ्के चिरं जनदृशः स्वकरैः क्षिपन्ति**
**तन्मात्रतोऽपि तव मुक्तिदतामबुद्ध्वा ॥**

हे मुक्तिद मोक्षप्रद, तव भूषणपद्मरागाः भूषणेषु प्रत्युप्ताः शोणमणयः स्वकरैः स्वकीयैः किरणैः जनदृशः भगवद्दर्शनार्थमागतानां जनानां लोचनानि कर्माणि चिरं क्षिपन्ति निरस्यन्ति इति शङ्के उत्प्रेक्षे । यथा रविमण्डलं द्रष्टॄणां लोचनानि स्वप्रभानिकरैश्चिरं निरस्यति तद्वत् । तत्र हेतुरुत्प्रेक्ष्यते— जनास्त्वां वीक्ष्य सखायं सादृश्यात्त्वेषां सुहृदं तरणिं सूर्यं भिन्द्युः किलेति । अनेन मित्रमण्डलभेदसंभावना हेतुत्वेनोपन्यस्ता । तन्मात्रतोऽपि त्वदङ्गभूषणप्रभाभिर्नेत्रप्रतिघातलाभमात्रेणापि तव मुक्तिदतां मुक्तिप्रदत्वमबुद्ध्वा अविचार्यैव । चिरमित्युक्त्या अबुद्ध्वेत्युक्त्या च पश्चाद्बुद्ध्वैव न

क्षिपन्तीत्यपि गम्यते । रविमण्डलमपि हि कंचित्कालं प्रभानिकरैर्लोचनानि प्रतिहन्ति । तत्प्रतिघातक्लेशं सोढ्वापि यत्नेन पुनः पुनर्वीक्ष्यमाणं तु दर्शनं प्रयच्छति । यथा राजकीयाः स्वसुहृद्धातुकं राजदर्शनार्थमन्तः प्रविविक्षन्तं द्वार्येव गलहस्तयन्ति तथा निरुन्धन्ति अप्रवेशेऽपि तस्य फललाभं पश्चात्तर्कयन्ति चेन्निरोधं विसृजन्ति, तत्साम्यमिह गम्यते । अत्र पद्मरागाणां रविमण्डलवदतिवैपुल्यमतिभास्वरत्वं च व्यञ्जितमित्युपमोत्थापिता वाच्या हेतूत्प्रेक्षा । ततश्चिरमबुद्ध्वेत्याभ्यां पश्चादप्रतिघातोत्प्रेक्षा गम्यते । एवमुपमोत्प्रेक्षाद्वयालंकृते प्रस्तुतपद्मरागवृत्तान्ते वर्ण्यमाने तत्सारूप्यादप्रस्तुतराजकीयवृत्तान्तप्रतीतेः समासोक्तिश्लेत्येतेषां संकरः । उत्प्रेक्षाभ्यां च कृतनिवर्तनरूप आक्षेपालंकारो ध्वन्यते । ‘ समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥’ इति समासोक्तिलक्षणोदाहरणे । तत्र रक्तमुखविशेषणसाधारण्यादप्रस्तुतवृत्तान्तप्रतीतिः । इह तु सारूप्यादिति विशेषः। सारूप्यनिबन्धनापि समासोक्तिरस्तीति तदुदाहरणपूर्वकं समर्थितं कुवलयानन्दे । ‘ आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् । चन्द्र संदर्शयात्मानमथ वास्ति प्रियामुखम् ॥’ इत्याक्षेपालंकारस्य लक्षणोदाहरणे । तत्र स्वयमुक्तप्रतिषेधस्यैवेह स्वयंकृतनिवर्तनस्याप्युदाहरणमुपपन्नम् ।

भगवद्दर्शनं लब्ध्वा आर्चिरादिमार्गेण परमं पदं गच्छतां सूर्यमण्डलमध्ये संभेदनं कृत्वा तेन द्वारेण गमनम् । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' 'स आदित्यमागच्छति, स तस्मै तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते' इत्यादिश्रुतिप्रसिद्धं चं ॥ ३४ ॥

इत्थमिह पञ्चभिः श्लोकैर्मङ्गलाचरणस्तोत्रारम्भाक्षेपसमाधानानि निबद्धानि; काञ्चीपुरी चतुर्भिः, एकेन भगवन्मन्दिरप्राकारः, एकेन गिरिशृङ्गाधिरोहणसोपानपङ्क्तिः, एकेन पुण्यकोटिविमानः, एकेन तत्र प्रत्यङ्मुखतया भगवतः संनिधानम्, सप्तभिर्भगवतः सर्वावयवसंस्थानविशेषरूपं सौन्दर्यम्, पञ्चभिर्लावण्यम्, त्रिभिर्देहकिरणानां श्यामलिमा, सप्तभिराभरणानि च वर्णितानि । अथैकैकशोऽवयवेषु वर्णनीयेषु अष्टादशभिः श्लोकैः किरणारुणिमरेखानखभूषणसहितश्रीपादवर्णनम्—

**पादावुपेन्द्र सुकुमारतमाविमौ ते**
**भूषाभरादरुणिमानमिवोद्वमन्तौ ।**
**इत्थं किमस्ति सुकुमारमितीव बोद्धुं**
**लोकत्रयेऽपि च करैः स्पृशतः पदार्थान् ॥**

हे उपेन्द्र, सुकुमारतमौ ये शिरीषादयः सुकुमारत्वेन

प्रसिद्धास्तेभ्यः सर्वेभ्योऽप्यतिशयेन सुकुमारौ । 'बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः' इति वामनसूत्रानुसारेण प्रतियोग्यनिर्देशेऽपि गम्यमानप्रतियोग्यपेक्षस्तमप्प्रत्ययः । भूषाभराद्भूषणानां बाहुल्यात् तद्भरासहिष्णुतया च अरुणिमानमुद्वमन्तौ किरन्ताविव स्थितौ ते तव पादौ इत्थमन्यदपि किंचित्सुकुमारमस्ति किमिति बोद्धुमिव लोकत्रयेऽपि सतः पदार्थान् करैः किरणैः स्पृशतः । सौकुमार्यं हि हस्तस्पर्शेन ज्ञातव्यम् । अतः करैः हस्तैरित्यपि गम्यते । अत्र उद्वमन्तावित्यस्य गौणार्थपरत्वान्न ग्राम्यता । यदाह दण्डी— 'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्तु ग्राम्यकक्ष्यां विगाहते ॥' इति । अत्रारुणिम्नः स्वतः प्रसरणे भूषणभरासहिष्णुत्वप्रयुक्तोद्वमनतादात्म्योत्प्रेक्षैका, बोद्धुमिवेति फलोत्प्रेक्षान्या । एवं स्वरूपफलोत्प्रेक्षयोः परस्परनिरपेक्षयोः संसृष्टिः । लोकत्रयगतपदार्थजातस्पर्शस्य फलिनः कविप्रौढोक्तिकल्पितत्वात्तदपेक्षया फलोत्प्रेक्षातिशयोक्त्योः संकरः ॥

**मूर्तिं प्रसाधयति ते चरणांशुपुञ्ज-**
**स्तां जैमिनिः कथमधीश निराकरोतु ।**
**सर्वत्र योगमुपपादयतारुणिम्न-**
**स्तेनारुणाधिकरणे हि मुनिः स भग्नः ॥**

हे अधीश, चरणांशुपुञ्जः चरणकिरणानां समूहः ते तव मूर्तिं प्रसाधयति अलंकरोति। प्रकर्षेण साधयति तत्सद्भावं स्थापयतीत्यपि लभ्यते। तां मूर्तिं जैमिनिः देवताविग्रहासहिष्णुः कथं निराकरोतु? कथमपि निराकर्तुं न शक्नोति। हि यस्मात् सर्वत्र सर्वेष्वपि अरुणिम्नो योगमुपपादयता संपादयता त्रैलोक्यवर्तिनः सर्वानपि पदार्थान्स्वसंबन्धेन अरुणीकुर्वता। उपपादयता समर्थयमानेन इत्यपि लभ्यते। मीमांसासूत्रकर्ता जैमिनिः अरुणाधिकरणे भग्नः। 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्ये श्रुतस्यारुणिम्नः सर्वेषु सोमक्रयसाधनद्रव्येषु नास्त्यन्वयः, किं तु समभिव्याहृतैकहायनीमात्र इत्यरुणाधिकरणे जैमिनिनोपपादितम्। तदुपपादनस्य सर्वत्रारुणिमयोगमुपपादयता भगवच्चरणांशुपुञ्जेन भङ्गो जात इत्येकत्र भग्नस्यान्यत्रापि स्वमतस्थापनसामर्थ्यं नास्तीत्यवसीयत इति भावः। अत्र कचित्तेन भग्नस्यान्यत्रापि तत्प्रातिभट्यानर्हत्वं भङ्गलिङ्गेन साध्यत इत्यनुमानालंकारः। स च प्रसाधनोपपादनशब्दश्लेषं भङ्गातिशयोक्तिं चापेक्षत इति संकरः॥ ३६॥

**अन्तस्तमांसि यमिनामपसारयन्ती**
**हृत्पङ्कजान्यपि च नाथ विकासयन्ती।**

भक्तप्रवेकभववारिनिधेस्तरण्यो-
स्त्वत्पादयोर्जयति कापि मयूखमाला ॥

हे नाथ, भक्तप्रवेकाणां भक्तश्रेष्ठानां सात्त्विकचित्तानां भवः संसार एव वारिनिधिः तस्य तरण्योः तरणसाधननौरूपयोः। तरण्योः सूर्ययोरित्यपि प्रतीयते। एवंभूतयोस्तव पदयोः कापि प्रसिद्धसूर्यमयूखविलक्षणा मयूखमाला जयति सर्वोत्कर्षेण वर्तते। 'जि जये' इति धातुरकर्मक उत्कर्षवाची। तद्वैलक्षण्यं पूर्वार्धेन दर्शितम्। यमिनामन्तस्तमांसि आन्तराणि तमोगुणविकारदोषजातानि अपसारयन्ती, हृत्पङ्कजानि तेषां हृदयपुण्डरीकाण्यपि विकासयन्ती उल्लासयन्तीति। अत्र बाह्यतमोमात्रनिवर्तकत्वाद्बाह्यकमलमात्रविकासकत्वाच्च प्रसिद्धसूर्यकिरणजालादाधिक्यं वर्णितमिति व्यतिरेकालंकारः। स च तमःशब्दश्लेषोत्थापित इति संकरः। योगिनां हृत्पङ्कजविकासो भगवत्प्रसादाधीन इति तच्चरणयोराराधितयोर्विकासकत्वमुक्तम्। हृत्पङ्कजायतनस्य चेतसो निर्वृतिरेवात्र विकासत्वेन विवक्षिता। 'प्रवेकानुत्तमोत्तमाः' इत्यमरः। 'पुंसि स्यात्सूर्यकिरणे तरणिर्वारिधावपि। स्त्री तु नावि च नद्यां च पुष्पस्तम्बान्तरे तथा॥' इति केशवः॥

मुष्णन्प्रभातसमयेषु मुरान्तकारि-
न्नङ्घ्रिद्वयश्रियमहस्करतस्करस्ते ।
यत्प्राप्यते न करभङ्गममुष्य बाल-
मित्रत्वमेव मिषति ध्रुवमत्र हेतुः ॥ ३८ ॥

हे मुरान्तकारिन्, अहस्कर एव तस्करः ते तव अङ्घ्रिद्वयस्य श्रियं शोभामेव संपदं प्रभातसमयेषु मुष्णन्नपि यत्करभङ्गं करच्छेदं न प्राप्यते अत्र अमुष्य अहस्करतस्करस्य बालमित्रत्वं बालसूर्यत्वं तदेव बाल्यमारभ्य सौहार्दं तदेव तद्रूप एव हेतुः कारणं मिषति जागर्ति । वर्तत इति यावत् । ध्रुवमित्युत्प्रेक्षाव्यञ्जकः शब्दः । प्रतिदिनं प्रातःकालेषु सर्वेषां प्रबोधसमयेषु मुष्णतो हस्तच्छेद एवोचितः । स बाल्यसौहार्दमनुरुध्य न क्रियत इत्युचितमेवैतत् । बालस्य सूर्यस्यास्तमेष्यत इव किरणक्षयो नास्तीति स्वाभाविकोऽर्थः । अत्र प्रकृतार्थमपेक्ष्य हेतूत्प्रेक्षा । सा चाहस्करतस्कर इति रूपकेण प्रभातसमयेषु सूर्ये भगवदङ्घ्रिसमानशोभादर्शनात्कविप्रौढोक्तिमूलतच्छ्रीमोषणकल्पनारूपातिशयोक्त्या श्रीकरमित्रशब्दश्लेषैश्चोत्थापितेति संकरः ॥

अङ्घ्रिद्वयस्य तव संततमन्तरङ्ग-
मम्भोजवर्गमिह योजयति श्रिया यत् ।

उत्कोचदानमिदमुष्णकरस्य बाल्या-
तत्कान्तिरत्नचयचोरणतत्परस्य ॥ ३९ ॥

तव अङ्घ्रिद्वयस्य संततमन्तरङ्गं सर्वदैवाप्ततमम् । सादृश्यमात्रात्तथाध्यवसायः । अम्भोजवर्गं श्रिया कान्त्यैव संपदा योजयतीति यत् । उष्णकरः कर्ता सामर्थ्याल्लभ्यते । इदं श्रिया योजनं बाल्याद्बालभावात्तत्कान्तिरत्नचयचोरणतत्परस्य अङ्घ्रिद्वयस्य कान्तय एव रत्नानि तेषां चयः समूहः तच्चोरणे तत्परस्य उष्णकरस्य उत्कोचदानमिति मन्ये । राजगृहादिषु चौर्यं चिकीर्षमाणा हि तदीयमाप्तवर्गं धनदानादिना स्ववशीकुर्वन्ति । अत्रान्तरङ्गत्वाध्यवसायरूपातिशयोक्त्या श्रीशब्दश्लेषेण कान्तिरत्नेति रूपकेण तच्चोरणकल्पनारूपातिशयोक्त्या चोत्थापितः स्वरूपोत्प्रेक्षालंकारः । 'सा तूत्कोच आमिषः' इति वैजयन्ती ॥ ३९ ॥

भानुर्निशासु भवदङ्घ्रिमयूखशोभा-
लोभात्प्रताप्य किरणोत्करमाप्रभातम् ।
तत्नोद्भूते हुतवहात्क्षणलुप्तरागे
तापं भजत्यनुदिनं स हि मन्दतातः ॥

भानुः भवदङ्घ्र्योः मयूखानां या शोभा सा स्वकिरणानामप्यस्त्विति लोभात् निशासु रहस्यत्वेन आप्रभातं स्वकिर-

णानामुत्करं समूहं प्रताप्य हुतवहे प्रतप्तं कृत्वा तत्र तस्मिन्किरणोत्करे हुतवहादुद्धृते क्षणेन लुप्तरागे सति तापं भजति ; यावद्रागानुवृत्ति भानोरौष्ण्यमनाभिव्यक्तं पश्चादाभिव्यक्तं भवति। स एव तापोऽनुतापः तमनुदिनं भजति । एकस्मिन्दिने स्वप्रयासवैयर्थ्ये दृष्टे कथमनुदिनमित्थमाप्रभातं प्रयासानुभव इत्यपेक्षायां तत्समर्थनार्थमिदम्——स हि मन्दतातः । हि यस्मात्सः मन्दस्य शनैश्चरस्यैव मन्दबुद्धेः तातः पिता । पितृगुणाः खलु पुत्रेषु संक्रामन्ति। यथोक्तं रामायणे——'सत्यश्चाद्य प्रवादोऽयं लौकिकः प्रतिभाति मे । पितॄन्समनुजायन्ते नरा मातरमङ्गनाः ॥' इति अत्र रविकिरणानां रात्रिष्वग्नौ प्रवेशः 'अग्निं वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिसिद्धः । तस्य निजकिरणेषु भगवच्चरणारुणिमप्रेप्सया तत्कृतं तेषामग्नौ प्रतापनं परिकल्प्य तेषामुदयकालदृश्यमरुणिमानं च तप्तोद्धृतलोहशलाकानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिं परिकल्प्य सूर्यस्य महतापि प्रतिदिनं क्रियमाणेन यत्नेन पश्चात्संतापहेतुस्तात्कालिकेष्टावाप्तिरेव जायते न सार्वकालिकेष्टावाप्तिरिति प्रतिपादनादिष्टार्थसमुद्यतस्य यावत्स्वेष्टावाप्त्यभावरूपो विषमालंकारः । तस्य च शोभालोभादिति निदर्शनया प्रताप्योद्धृत इत्यतिशयोक्तिभ्यां तापशब्दश्लेषेण च संकरः । एवमप्रस्तुतभानुवृत्तान्तवर्णनेन वर्णनीयत्वेन प्रस्तुतानां भगवदङ्घ्रिकिरणा-

नां सर्वाधिकारुणिमोत्कर्षप्रतीतेरप्रस्तुतप्रशंसायां पर्यवसानम् ॥ ४० ॥

**तौल्यं वदन्तु कवयस्तरुपल्लवानां**
**मुग्धास्त्वदीयचरणेन मुकुन्द किं तैः ।**
**तान्येव तत्तदधरोष्ठमिषात्सदानीं**
**कम्पं भजन्ति कथयन्ति किलात्मनैच्यम् ॥**

हे मुकुन्द, मुग्धा अनभिज्ञाः कवयः तरुपल्लवानां त्वदीयचरणेन तौल्यं वदन्तु नाम । तैः किम, तथा वदद्भिस्तैः किं साधितं स्यात्? न किमपि । तत्र वाक्यार्थरूपो हेतुरुच्यते—तानि तरुपल्लवान्येव तत्तदधरोष्ठमिषात् ये कवयस्तथा वदन्ति तेषामधरोष्ठव्याजेन कम्पं भजन्ति तत्तदुक्तिसमये चलनं प्राप्नुवन्ति सन्ति आत्मनैच्यं कथयन्ति अभिव्यञ्जयन्ति किल । निजस्वरूपाभिज्ञाः स्वपक्षपातिभिर्महता समत्वेन स्तूयमानास्तदनौचित्यमालोच्य भयविनयाभ्यां स्वयं कम्पमाना भवन्तीति लोकसिद्धम् । अत्र किलशब्दो हेत्वर्थश्चेन्न काव्यलिङ्गं किं तु प्रसिद्ध्यर्थश्चेदेव । तस्य तौल्यं वदन्त्विति लोकप्रसिद्धस्योपमानस्योपमेयत्वकल्पनरूपेण प्रतीपेन अधरोष्ठमिषादीति कैतवापह्नुत्या च संकरः । 'कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः । निर्यान्ति स्मरनाराचाः का-

-न्तादृक्पातकैतवात् ॥' इति तल्लक्षणोदाहरणे । कथयन्तीत्यभिव्यञ्जनमेव स्पष्टतया कथनत्वेनाध्यवसितम् ॥ ४१ ॥

पद्मोपमात्पदयुगात्तव रत्नगर्भा
जातेति पद्मसदृशाकृतिमाहुरेनाम् ।
कार्यं हि कारणगुणानतिवर्ति लोके
प्रायः पतङ्गपतिवाह विलोकयामः ॥

रत्नगर्भा वसुंधरा पद्मोपमात्पद्मसदृशात् तव पदयुगाज्जाता । 'पद्भ्यां भूमिः—' इति मन्त्रवर्णात् । इति हेतोः एनां वसुंधरां पद्मसदृशाकृतिमाहुः पौराणिकाः । भूवलयपद्मस्य मध्यगतः काञ्चनगिरिः कर्णिका । तां परितः केसराचलाः । ततो बहिः पत्राचला इति हि विष्णुपुराणादिषु प्रतिपादितम् । वामनपुराणेऽप्युक्तं प्रह्लादकृतभगवदन्वेषणप्रस्तावे—'भूमिं तु पङ्कजाकारां तन्मध्ये कर्णिकाकृतिम् । मेरुं ददर्श शैलेन्द्रं शातकुम्भं महर्द्धिमत् ॥' इति । उत्प्रेक्षितो हेतुः सामान्योक्त्या समर्थ्यते—कार्यं कारणगुणानातिवर्ति कारणगुणानुसारिगुणवत् लोके प्रायः बाहुल्येन विलोकयामः पश्यामः । हिः प्रसिद्धौ । पतङ्गपतिवाह गरुडवाहनेति संबुद्धिः । उपमोत्थापितगम्यहेतूत्प्रेक्षामूलः सामान्येन विशेषसमर्थनारूपोऽर्थान्तरन्यासः । 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।

हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥' इत्यर्थान्तरन्यास-लक्षणोदाहरणे ॥ ४२ ॥

कल्याणशालिकमलाकरलालनीय-
मामेवकश्रुतिमनोहरनादिहंसम् ।
आमोदमेदुरमरुन्नमितालिकान्तं
शङ्के नवेश्वर पदं शतपत्रमेव ॥ ४३ ॥

हे ईश्वर स्वामिन्, कल्याणैर्मङ्गलैः शाली श्लाघ्यः । 'शाल श्लाघायाम' इति धातोः कर्मण्यौणादिकः । 'शालि स्याच्छ्लाघ्यं शालि मनोरमम्' इति केशवः । कल्याणश्रेष्ठ इति वा । 'शालिश्रेष्ठौ समावुभौ' इत्युक्तशेषाध्याये शब्दरत्नाकरः । तेन कमलायाः करेण संवाहनक्रियया कमलपक्षे धारणेन च लालनीयम्, आ समन्तात् सेवकाः श्रुतिमनोहरनादिनः वेदानां यो मनोहरो नादः, पक्षे श्रोत्रसुखो नादः, तद्वन्तो हंसा यतयः पक्षिणश्च यस्य तत्तथोक्तम्, आमोदेन हर्षेण मेदुरैः सान्द्रैर्मरुद्भिर्देवैः नमिता नतिं प्रापिता अलिकानां ललाटानामन्ता यस्मिंस्तत्तथोक्तम्, पक्षे आमोदेन पद्मसौरभेण मेदुरैः सान्द्रैः मरुद्भिर्मारुतैः नमिता आनीताः ये अलयो भृङ्गाः तैः कान्तम् । 'हंसोऽर्के विहगे विष्णौ जीवे श्वेतनृपे स्मरे । निःसपत्ननृपे भिक्षौ' इति 'ललाटमलिकं फालम्'

इति 'आमोदो मुत्सुगन्धयोः' इति 'मरुद्देवसमीरयोः' इति च शब्दरत्नाकरः। एवंभूतं तव पदं शतपत्रं पद्ममेव शङ्के। अत्र कल्याणशालीत्याद्यर्थश्लेषेण आसेवकेत्याद्यभङ्गशब्दश्लेषेण चोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ ४३ ॥

स्पर्शं ययोः समधिगम्य झटित्यहल्या
देवी च भूरभवदुज्झितसर्वपङ्का।
ताभ्यां घटेत समता भवतः पदाभ्या-
माजन्मपङ्कवसतेः कथमम्बुजस्य ॥ ४४ ॥

अहल्या देवी भूर्वसुंधरा च ययोः स्पर्शं समधिगम्य संप्राप्य झटिति तदैव उज्झितसर्वपङ्का त्यक्तसमस्तपापा अभवत्, ताभ्यां भवतः पदाभ्याम् आजन्म जन्मप्रभृति पङ्क एव वसतिर्यस्य। पङ्कस्य पापस्य वसतेरित्यपि विवक्षितम्। तस्याम्बुजस्य समता कथं घटेत? स्वपापमपि क्षालयितुमक्षमस्य तथाभूताभ्यां भवतः पदाभ्यां समता घटत इति संभावनापि नास्तीत्यर्थः। अत्र वाक्यार्थहेतुकं पदार्थहेतुकं च काव्यलिङ्गमलंकारः। द्वयोरपि पङ्कशब्दश्लेषेण संकरः। 'पङ्कोऽस्त्री कर्दमैनसोः' इति यादवः। धरण्यहल्ययोरेकक्रियान्वयरूपेण तुल्ययोगितालंकारेण वाक्यार्थहेतुकस्य काव्यलिङ्गस्य संकरः। कृष्णावतारं कृतवतो भगवतः पादस्पर्शाद्भूमेरिन्द्र-

विसृष्टब्रह्महत्यारूपमहापातकविमोक्षः स्कान्दे नागरखण्डे प्रतिपादितः । तत्रैतानि वचनानि—'आदौ क्षमामेत्य तदा ह्यूचुः सर्वे दिवौकसः । एकस्त्वंशस्त्वया ग्राह्यो हत्यायाः कार्यसिद्धये ॥ सुराणां तद्वचः श्रुत्वा पृथिवी कम्पितावदत् । कथं ग्राह्यो मया ह्यंशो हत्यायास्तद्विमृश्यताम् ॥ अहं हि सर्वभूतानां धात्री विश्वंभरास्म्यहम् । अपवित्रा भविष्यामि ह्येनसा संप्लुता भृशम् ॥ पृथिव्यास्तद्वचः श्रुत्वा बृहस्पतिरुवाच ताम् । मा भैषीश्चारुसर्वाङ्गि निष्पापासि न चान्यथा ॥ यदा यदुकुले श्रीमान्वासुदेवो भविष्यति । तदा तत्पदविन्यासैर्निष्पापा त्वं भविष्यसि ॥ कुरु वाक्यं तदस्माकं नात्र कार्या विचारणा । इत्युक्ता पृथिवी चैषा देवानां साकरोद्वचः ॥' इति ॥ ४४ ॥

**मातङ्गशैलमणिशेखर ते पदाभ्यां**
**मोहेन साम्यमनुचिन्त्य कृतापराधम् ।**
**शङ्के सरोजमनयोरुभयोरुपेत्य**
**रेखाच्छलेन सततं विदधाति सेवाम् ॥**

हे मातङ्गशैलमणिशेखर हस्तिशैलस्य रत्नशेखरवच्छोभावह, ते तव पदाभ्यां मोहेन अज्ञानेन मौढ्येन वा । 'मोहो वैचित्त्यमौग्ध्ययोः' इति शब्दरत्नाकरः । साम्यमनुचिन्त्य

सादृश्यं विचार्य ततः कृतापराधम् अत एव हि तत्सरोजमुपेत्य रेखाच्छलेन पद्मरेखाव्याजेन अनयोरुभयोः सेवामपराधक्षालणार्थं विदधाति इति शङ्के। अत्र नेयं कमलरेखा, किं त्वपराधपरिहारार्थं सदा सेवां कुर्वत्प्रसिद्धं कमलमेवेति च्छलशब्देन प्रतीतेः कैतवापह्नुतिरलंकारः। तस्याः साम्यानुचिन्तनाद्यतिशयोक्त्या संकरः। मणिशेखरेत्यतिशयोक्त्या संसृष्टिः॥

लेखाधिनाथवनपल्लवधैर्यचोरे
रेखामयं पदतलं कमलं यदेतत्।
तत्रैव विश्रमजुषोऽच्युत रागलक्ष्म्याः
क्रीडानिशान्तकमलं तदिति प्रतीमः॥

हे अच्युत, लेखाधिनाथो देवेन्द्रः तस्य वनं नन्दनं तत्संबन्धिनां पल्लवानां कल्पवृक्षप्रवालानां यद्धैर्यमरुणिमोत्कर्षाभिमानकृतं तस्य चोरे मोषके तव पदतले रेखामयं रेखारूपं यत्कमलं तदेतत् तत्रैव त्वत्पदतल एव विश्रमजुषः विश्रान्तेः परां काष्ठां प्राप्तवत्याः रागलक्ष्म्याः रागसंपदः क्रीडानिशान्तकमलं लक्ष्मीः कमलवासिनीति तस्याः क्रीडागृहरूपं कमलं प्रतीमः जानीमः। तत्रैव विश्रमजुष इत्यतिशयोक्तिगर्भो लक्ष्मीशब्दश्लेषगर्भश्च स्वरूपोत्प्रेक्षालंकारः। तस्य धैर्यचोरे इत्यतिशयोक्त्या संसृष्टिः॥ ४६॥

यस्याः स्वमूर्त्यनुगुणाकृतिशक्तियुक्तः
पादाम्बुजद्वयमिषात्कमठाधिराजः ।
मूले वसत्युचितमेव निगद्यते सा
मूर्तिर्महापुरुष तेऽखिललोकरूपा ॥ ४७ ॥

हे महापुरुष, ते तव मूर्तिः अखिललोकरूपा चतुर्दशभुवनात्मिकेत्युचितमेव निगद्यते पौराणिकैः 'पातालमेवास्य हि पादमूलम्' इत्याद्यं महापुरुषसंस्थानं वर्णयद्भिः । तदुपपाद्यते पूर्ववाक्येन— यस्याः स्वमूर्तेर्मूले पादाम्बुजद्वयमिषात् पादाम्बुजद्वयमिति व्याजात् स्वमूर्त्यनुगुणाकृतिशक्तियुक्तः कमठाधिराजः श्रीकूर्मो वसति । पातालमूले हि श्रीकूर्मस्य वासो युक्तः । तस्य च 'देवत्वे देवदेहेयं मानुषत्वे च मानुषी । विष्णोर्देहानुसारेण करोत्येषात्मनस्तनुम ॥' इति विष्णुपुराणवचनानुसारेण स्वमूर्तितुल्यमूर्तिधारिण्या शक्त्या श्रीमहालक्ष्मीरूपया नित्यं योगोऽप्युचितः । तयोर्नित्ययोगसाक्षित्वेन 'इयं सा परमा शक्तिर्मम या ब्रह्मरूपिणी । माया मम प्रियानन्ता ययेदं मोहितं जगत् ॥ अनयैतज्जगत्सर्वं सदेवासुरमानुषम् । मोहयामि द्विजश्रेष्ठ ग्रसामि विसृजामि च ॥ उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम । विज्ञाय वीक्ष्य चात्मानं तरन्ति विपुलामिमाम् ॥ अस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन्द्विज ।

ब्रह्मेशानादयो देवाः सर्वशक्तिरियं मम ॥ तस्य मे परमा शक्तिर्ज्योत्स्नेव हिमदीधितेः । सर्वावस्थागता देवी स्वात्मभूतानपायिनी । अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी ।' इत्यादिषु कूर्मपुराणलक्ष्मीतन्त्रादिवचनेषु श्रीमहालक्ष्म्या भगवच्छक्तित्वमुक्तम् । 'लक्ष्मीः पद्मालया शक्तिः क्षीरोदधिसुतेन्दिरा' इति वैजयन्त्याम् । 'शक्तिभूः शूर्पकारातिरिक्षुधन्वा च हृच्छयः' इति शब्दरत्नाकरे । 'शक्तिः साक्ष्यन्तरे पुमान् । स्त्री सांख्यप्रकृतौ लक्ष्म्यां सामर्थ्ये नीतिवेदिनाम् । प्रसिद्धा तु प्रभावादिजातासु स्यात्तिसृष्वपि ॥' इति केशवनिघण्टौ च विशिष्यापि तस्यां शक्तिशब्दोऽनुशिष्टः । अत्रापह्नुत्यनुगृहीतं काव्यलिङ्गमलंकारः ॥ ४७ ॥

किं द्वादशात्मनि रवौ भगवन्धृतेर्ष्य-
श्चन्द्रस्ततोऽप्यधिकतामधिगन्तुमेव ।
एते तवेह दश भान्ति पदाङ्गुलीषु
स्वात्मान इत्यजनि चित्तदृगर्णवेभ्यः ॥

हे भगवन्, चन्द्रः सूर्यप्रतिद्वन्द्वितया द्वादशात्मनि द्वादशदेहशालिनि रवौ सूर्ये धृतेर्ष्यः अक्षमायुक्तः सन् ततोऽप्यधिकतां त्रयोदशदेहवत्तारूपामधिगन्तुं प्राप्तुमेव तव इह एतासु पदाङ्गुलीषु एते दश स्वात्मानः स्वदेहा नखरूपा भान्तीति

मत्वा चित्तद्दगर्णवेभ्यः 'चन्द्रमा मनसो जातः' इति श्रुतेः भगवच्चित्तादत्रिनयनात्कलशाम्बुधेश्च अजनि जातः किम्? 'दीपजनबुध–' इत्यादिना कर्तरि चिण्। 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इत्यमरः। अत्राधिगन्तुमिति फलोत्प्रेक्षा धृतेर्ष्ये इति कविप्रौढोक्तिकल्पितेर्ष्यासंबन्धातिशयोक्त्या स्वात्मान इति नखेषु चन्द्रताद्रूप्यातिशयोक्त्या चोत्थापितेति संकरः ॥ ४८ ॥

भासा पदं तव रमाधिप भूषयन्ति
संसेवकांश्च विबुधान्परितोषयन्ति।
नाथ क्षिपन्ति च तमांसि नखेन्दवस्ते
संशोषयन्त्यपि तु भक्तभवाम्बुराशिम् ॥

हे नाथ रमाधिप, ते तव नखेन्दवः नखा एवेन्दवः तव पदं चरणं पक्षे विष्णुपदमाकाशं भासा भूषयन्ति, संसेवकान्सम्यक्सेवां कुर्वतः विबुधान् विवेकिनः परितोषयन्ति च, पक्षे चन्द्रकलामृतनिषेवणं कुर्वतो विबुधान्वह्न्यादीन् तर्पयन्ति, तमांसि क्षिपन्ति च। अपि तु एवं प्रसिद्धचन्द्रसाम्ये सत्यपि भक्तानां भवाम्बुराशिं संशोषयन्ति। अत्र आपाततो न्यूनव्यतिरेकः, विवेचने त्वाधिकव्यतिरेकः। तस्य श्लेषैः संकरः ॥ ४९ ॥

गङ्गाच्छलेन तव निःसृतमूर्ध्वगाण्ड-
संघट्टनात्पदनखाग्रमयूखलेशम् ।
आलोक्य नूनममराः पतितं पयोधा-
वामथ्य तं जगृहुरीश तदिन्दुरूपम् ॥

हे ईश, ऊर्ध्वगाण्डसंघट्टनात् ऊर्ध्वदेशगतं यदण्डं ब्रह्माण्डं तत्संघट्टनात् तव पदनखाग्रमयूखलेशं गङ्गाच्छलेन निःसृतं पयोधौ पतितम् अमराः आलोक्य तद्ग्रहणार्थं तं पयोधिमामथ्य इन्दुरूपं नवनीतवन्मथनेन घनीभूय चन्द्ररूपतां प्राप्तं जगृहुः । नूनमित्युत्प्रेक्षा । त्रिविक्रमावतारे ऊर्ध्वप्रसारितभगवच्चरणनखाग्रनिर्भिण्णोर्ध्वाण्डाच्छिद्रनिःसृतबहिर्जलधारारूपा गङ्गा मेरोरुपरि ब्रह्मपुर्याश्चितसृषु दिक्षु प्रवहानिलेन चतुर्धा विभक्ता पतिता सती सीतालकनन्दा चक्षुर्भद्रेति क्रमेण संज्ञाचतुष्टययुक्ता प्राच्यादिसमुद्रेषु पतितेति विष्णुपुराणादिषु वर्णितम् । अत्र चन्द्रस्य मथनगृहीतभगवच्चरणनखमयूखलेशपरिणतिविशेषतादात्म्यसंभावनारूपा स्वरूपोत्प्रेक्षा संघट्टनस्य नखमयूखानां नखं विहायान्यत्र गमने हेतुत्वाभावेऽपि हेतुत्वकल्पनाच्च हेत्वलंकारः । गङ्गाच्छलेनेत्यत्रापह्नुतिरिति एतैरलंकारैरुत्प्रेक्षायाः संकरः । ‘ कयापि विधया हेतुः कल्पितो हेत्वलंकृतिः । असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥’

इति हेत्वलंकारस्य लक्षणोदाहरणे । चन्द्रोदयस्य मानिनीमानविच्छेदाहेतुत्वेऽपि चतुर्थ्या प्रतीतं तदुद्देश्यकत्वमस्तीति तेन रूपेण कल्पितो हेतुः । एवमप्रस्तुतचन्द्रगतभगवच्चरणनखमयूखलेशपरिणतिविशेषत्वात्प्रेक्षणाद्वर्णनीयत्वेन प्रस्तुतो भगवच्चरणनखमयूखभूमा प्रतीयते इत्यप्रस्तुतप्रशंसालंकारः । 'प्रस्तुतस्यावगत्यर्थं यदप्रस्तुतवर्णनम् । अप्रस्तुतप्रशंसा सा किंचित्संबन्धसंश्रया ॥' नैषधचरिते—' हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा । कृतमध्याबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥' इति तल्लक्षणोदाहरणे ॥ ५० ॥

**पादानमत्सुरशिरोमणिपद्मरागा-**
**न्सद्यः स्फुरत्सहजरुक्प्रकरान्कराग्रैः ।**
**मुक्तामयान्विदधतां प्रकटं मुरारे**
**जैवातृकत्वमुचितं ननु ते नखानाम् ॥५१॥**

हे मुरारे, पादयोरानमतां सुराणां शिरोमणिपद्मरागान् चूडामणिरूपानरुणमणीन् स्फुरत्सहजरुक्प्रकरान् स्फुरन्तः प्रकाशमानाः सहजाः स्वाभाविकाः अरुणवर्णाः रुक्प्रकराः दीप्तिनिकराः येषां ते । पक्षे स्फुरन्तः अभिव्यक्ताः सहजाः जन्मप्रभृत्यनुवृत्ताः अत एव दुःसाधाः रुक्प्रकराः नानाविधव्याधिसमूहा येषां ते । तथाभूतानपि सद्यः स्वसमा-

गमक्षण एव मुक्तामयान्मुक्ताफलरूपान् । पक्षे मुक्तसकलरोगान् विदधतां ते नखानां जैवातृकत्वमुचितं ननु उचितं भवत्येव । जैवातृकत्वं प्रकृते चन्द्रत्वं पक्षे भिषक्त्वं दीर्घायुष्ट्वं वा । 'अथ जैवातृकः पुमान् । चन्द्रे च परिखायां च परिवेऽथ द्वयोः शुके । धने तु क्लीबमायुष्मत्कृषीवलभिषक्षु सः ॥' इति केशवः । यः स्वसमागममात्रेण दीर्घतीव्रामयनिकरग्रस्तानप्युल्लाघयति तस्य वैद्यकेष्वतिनिपुणस्य भिषक्त्वं संभावितं स्वकीयसकलव्याधिपरिहारेण दीर्घायुष्ट्वं वा युक्तमेवेति भावः । अत्र नखानां जैवातृकत्वं रूपकलभ्यम्, तदेव श्लेषमूलातिशयोक्त्या भिषक्त्वायुष्मत्त्वरूपमध्यवसितमिति रूपकातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणः संकरः । तदुत्थापकस्य स्फुरत्सहजरुक्प्रकरानित्यत्र मुक्तामयानित्यत्र च श्लेषस्य तयातिशयोक्त्या अङ्गाङ्गिभावलक्षणः संकरः । मुक्ताफलत्वप्राप्त्युक्त्या तद्गुणालंकारश्च प्रतीयते ॥ ५१ ॥

यत्ते पदाम्बुरुहमम्बुरुहासनेड्यं
धन्याः प्रपद्य सकृदीश भवन्ति मुक्ताः ।
नित्यं तदेव भजतामतिमुक्तलक्ष्मी-
युक्तैव दिव्यमणिनूपुरमौक्तिकानाम् ॥

हे ईश, अम्बुरुहासनेन ब्रह्मणा ईड्यं स्तुत्यं तव यत्प-

दाम्बुरुहं धन्याः कृतार्थाः सकृत् एकवारं प्रपद्य मुक्ता भवन्ति तदेव नित्यं भजतां प्रपद्यमानानां दिव्यमणिनूपुरमौक्तिकानाम् अतिमुक्तलक्ष्मीः 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इत्यमरः। तदीयमुकुलानां शोभैव मुक्तातिशायिनी संपत् सा युक्तैव। सकृत्प्रपन्नेभ्यः सदा प्रपद्यमानानामतिशयितफलावाप्तिर्युक्तैवेत्यर्थः। अत्र युक्तत्वोपपादने पूर्ववाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। अतिमुक्तलक्ष्मीरित्यत्र अन्यदीया शोभा अन्यत्रान्वयमलभमाना तत्समानशोभां गमयतीत्यसंभवत्तद्वस्तुसंबन्धनिबन्धना निदर्शना तत्रैव श्लेषमूलातिशयोक्तिश्चेति तयोरेकवाचकानुप्रवेशलक्षणः संकरः। काव्यलिङ्गेनातिशयोक्तेरङ्गाङ्गिभावसंकरः। पदाम्बुरुहमित्यत्र पदमम्बुरुहमिवेति 'उपमितं व्याघ्रादिभिः—' इति सूत्रेण पूर्वपदार्थप्रधान उपमितसमास इत्युपमालंकारस्य तैः सह संसृष्टिः ॥ ५२ ॥

**नाथ त्वदङ्घ्रिनखधावनतोयलग्ना-**
**स्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः।**
**ता एव तस्य मथनेन घनीभवन्त्यो**
**नूनं समुद्रनवनीतपदं प्रपन्नाः ॥ ५३ ॥**

हे नाथ विष्णो, त्वदङ्घ्रिनखधावनतोयलग्नाः त्वच्चरण-

नखप्रक्षालनजले गङ्गारूपे लग्नाः तेषां नखानां कान्तिलेशकणिकाः जलधिं प्रविष्टाः समुद्रं प्राप्ताः ता एव कणिकाः तस्य जलधेर्मथनेन घनीभवन्त्यः सान्द्रतां प्राप्ताः नूनं समुद्रसंबन्धिनो नवनीतस्य चन्द्रस्य पदं प्राप्ताः चन्द्ररूपेण परिणता इत्यर्थः । अत्र भगवत्पादाम्बुजक्षालनतोयरूपायां दिव्यसरिति अलक्तकरसादिवल्लग्नानां तया सह समुद्रं प्रविष्टानां तन्नखकान्तिलेशकणिकानां परिणामतया संभाव्यमानेन समुद्रनवनीतपदवाच्येन चन्द्रेण कार्येण तन्नखकान्त्युत्कर्षः प्रतीयते । तद्धेतुनखकान्त्युत्कर्ष इत्यर्थः अत्राप्रस्तुतप्रशंसा स्वरूपोत्प्रेक्षा च । 'समुद्रनवनीतं स्याच्चन्द्रः' इति नानार्थरत्नमाला ॥ ५३ ॥

अथ क्रमेण जङ्घाद्यवयववर्णनानि—

**सव्यापसव्यशरमोक्षकृतीक्षुधन्वा**
**जङ्घे तव स्वशरधी इति संदिहानः ।**
**आलोकलेऽङ्घ्रिकटकोद्गतरुक्छलेन**
**न्यस्याभितो निजशराननुरूपभावम् ॥**

सव्यापसव्यशरमोक्षकृती अर्जुन इव सव्यभागेन अपसव्यभागेन च शराणां मोक्षे कृती पटुः अत एव इषुधिद्वय-

वान् इक्षुधन्वा मन्मथः तव जङ्घे पश्यन्नाकृतिसाम्याज्जगन्मोहनत्वाच्च स्वशरधी स्वकीयाविषुधी इति संदिहानः तत्संदेहनिवृत्त्यर्थं निजशरान् अभितः जङ्घे परितः अङ्घ्रिकटकोद्भूतरुक्छलेन न्यस्य निधाय आलोकते । स्वकीयशरैः प्रमाणत्वः साम्ये स्वकीयाविषुधी इति निश्चेतुं शक्यमित्याशयेनेति भावः । अत्र सापह्नवोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । कुवलयानन्दोक्तप्रकारेण सापह्नवातिशयोक्तिर्वा ॥ ५४ ॥

जानुद्वयं तव जगत्त्रयनाथ मन्ये
मारस्य केलिमणिदर्पणतामुपेतम् ।
आलोकयन्यदवदातमनोज्ञवृत्तं
रूपं निजं कलयते विपरीतमेषः ॥ ५५ ॥

हे जगत्त्रयनाथ, तव जानुद्वयं मारस्य मन्मथस्य केलिमणिदर्पणतां क्रीडार्थमणिमयादर्शताम् उपेतं प्राप्तं मन्ये तर्कयामि । अवदातमनोज्ञवृत्तमतिनिर्मलमनोहरवृत्ताकारं यज्जानुद्वयमालोकयन्पश्यन् एष मन्मथः निजमात्मीयं रूपं विपरीतं कलयते सुन्दरमिति प्रसिद्धमात्मीयं रूपं गर्हितत्वेन तद्विपरीतं मन्यते । दर्पणं पश्यन्नपि तत्र प्रतिबिम्बितं स्वं रूपमवलोकमानः स्वयं प्राङ्मुखस्तद्वैपरीत्येन प्रत्यङ्मुखं पश्यतीति भावः । यो नरः परेषां मारको हिंस्रः स विशुद्धसकलजनरञ्जनचरि-

त्रं पश्यन्स्वं रूपं पापमलिनतया तद्विपरीतं यथा मन्यते तद्व-
दित्यपि प्रतीयते । तेनोपमालंकारध्वनिः । जानुद्वयस्य मणि-
दर्पणत्वेनोत्प्रेक्षणादुत्प्रेक्षा मन्ये इति तद्वाचकप्रयोगाच्च । उत्प्रे-
क्षायां निमित्तमुत्तरार्धेनोक्तम् ॥ ५५ ॥

ऊरोः किमन्यदयतामुपमानभावं
वामस्य दक्षिणममुष्य च तं विहाय ।
रम्भादयः सदृश इत्युचितं किमेन
यस्योर्वशी सुभग सापि विभूतिलेशः ॥

हे सुभग सुन्दर, तव ऊरोः वामस्य दक्षिणम् अमुष्य दक्षिणस्य तं वामं च विहाय किमन्यदुपमानभावमयतां प्राप्नोतु? अन्यत्किमप्युपमानत्वं नार्हतीत्यर्थः । शङ्कितोपमानान्तरनिरासेन तदुपपादकमुत्तरार्धम । रम्भादयः रम्भा गजकर इत्याद्याः सदृशः भगवदूरोः सदृक्षा इत्येतदुचितं किम्? नैवोचितम । कुतः? यस्य भगवदूरोः सा स्वर्वेश्यास्वतिसुन्दरीति प्रसिद्धा उर्वश्यपि विभूतिलेशः भगवदूरोः प्रसूता हि सा पुराणेषु प्रसिद्धा । अत्रोर्वशीप्रतिकोटितया रम्भादय इत्यनेन रम्भातिलोत्तमादयोऽपि प्रतीयन्ते । तत्प्रतीतिमपेक्ष्य कैमुतिकन्यायोपन्यास इति श्लेषसंकीर्णोऽर्थापत्त्यलंकारः । उत्तरवाक्यार्थः पूर्ववाक्यार्थोपपादक इति काव्यलिङ्गम् । पू-

र्वार्धे वामस्य दक्षिणमित्यादिना पर्युदासाद्वामदक्षिणयोः परस्परमौपम्यं गम्यत इत्येवं व्यज्यमानोपमेयोपमा सदृशान्तरपरिवर्जनरूपायां परिसंख्यायामुपकरोतीति गुणीभूतव्यङ्ग्यभेदः । एतेषामलंकाराणां संकरः ॥ ५६ ॥

नाथ त्वया परिहितं वरवर्णिनीनां
रागस्य यद्वसनमास्पदतां बिभर्ति ।
सौन्दर्यसारनिलयेन कटीतटेन
तस्यैष किं नु महिमा परिशीलनस्य ॥

हे नाथ, त्वया परिहितं वसनं पीताम्बरं वरवर्णिनीनां रागस्य आस्पदतां हरिद्राणां वर्णस्याधारताम्, पक्षे सुन्दरीणामनुरागस्य विषयतां बिभर्तीति यत् एषः तस्य वसनस्य सौन्दर्यसारनिलयेन कटीतटेन यत्परिशीलनं तस्य महिमा किं नु संसर्गगुणोऽयं किम्? अत्र वरवर्णिनीरागास्पदत्वे हेतूत्प्रेक्षा । सा च वरवर्णिन्यादिशब्दश्लेषापेक्षा, वरवर्णिनीवर्णास्पदत्वमसंभवत्तत्समानवर्णास्पदत्वं गमयतीत्यसंभवद्वस्तुसंबन्धनिबन्धननिदर्शनापेक्षा, सौन्दर्यसारनिलयेनेति पदार्थहेतुककाव्यलिङ्गापेक्षा, चेत्येतेषां संकरः । 'निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी.' इत्यमरः ॥ ५७ ॥

संप्राप्य सारसनमध्यतलोदयाद्रिं
मध्याम्बरं मसृणयन्नरुणैर्मयूखैः ।
संवीक्ष्यते सुकृतिभिर्मणिरेष पूषा
संसाररात्र्युपरतिं गतवद्भिरेव ॥ ५८ ॥

सारसनस्य मेखलाख्यस्य कटिदेशाभरणस्य मध्यतलमेवोदयाद्रिः तं संप्राप्य मध्याम्बरं मध्यमेवाकाशम् अरुणैर्मयूखैः मसृणयन्स्निग्धं मनोहरं कुर्वन् एष मणिः पद्मरागमणिरेव पूषा संसाररात्रेः उपरतिं गतवद्भिः प्राप्तवद्भिरेव सुकृतिभिः संवीक्ष्यते नान्यैः । अत्र मणिः पूषेति व्यस्तरूपकानुरोधात् सारसनमध्यतलोदयाद्रिमित्यादिष्वपि रूपकसमास इति सावयवरूपकालंकारः । 'मेखलायां सारसनं रस्यमानेऽपि केचन' इति केशवः ॥ ५८ ॥

नाभेरभूत्तव चतुर्भुज नान्तरिक्षं
यन्नाभिरेव यदुनेतरियं ततोऽभूत् ।
नाभ्या इति श्रुति विपर्ययगे विभक्ती
तां जैमिनेरनुससार पशोश्चसूत्रम् ॥

हे चतुर्भुज यदुनेतः यदुनायक, तव नाभेरन्तरिक्षं नाभूत् यदियं नाभिरेव ततोऽन्तरिक्षादभूत् । मध्यमत्रान्तरिक्षत्वेनाध्यवसितम् । एवं च सति नाभ्या इति श्रुतिः 'नाभ्या

आसीदन्तरिक्षम्' इति श्रुतौ प्रथमापञ्चम्यौ विभक्ती विपर्ययगे पञ्चम्यर्थे प्रथमा प्रथमार्थे पञ्चमीत्येवं विपरीतार्थपरे एव। तथा च अन्तरिक्षान्नाभिरासीदिति श्रुतेरर्थः। एवं च श्रुतौ श्रुतयोः प्रथमापञ्चम्योर्विपर्ययः। एवं विपर्ययकल्पनं नायुक्तम्, यतस्तां श्रुतिं जैमिनेः पूर्वतन्त्रकृतः 'पशोश्च विप्रकर्षः—' इत्यादिकं सूत्रम् अनुससार अनुसरति स्म। तथा च तदनुसारेण जैमिनीयमपि सूत्रं प्रवृत्तम्—'पशोश्च विप्रकर्षस्तन्मध्ये विधानात्' इति। ज्योतिष्टोमे सौत्येऽहनि सवनीयपशुस्तन्त्री सवनीयपुरोडाशः प्रसङ्गी, न तु वैपरीत्यम्, पशुप्रयोगस्य व्यापित्वात्पुरोडाशप्रयोगाणां छिद्रापिधानवत्तन्मध्यपातित्वादिति प्रतिपादयितुमिदं सूत्रं कृतम्। इदं यथाश्रुतं न विवक्षितार्थसमर्पणक्षमम्। विप्रकर्षो ह्यत्र प्रथमान्तनिर्दिष्टः साध्यत्वेनावगम्यते। तन्मध्ये विधानं तु पञ्चम्यन्तं निर्दिष्टं हेतुतया। एवमन्वयो न संगच्छते यतो विप्रकर्षः प्रातरादिकालत्रयसंबन्धरूपः 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने सवने अङ्गैस्तृतीयसवने' इति प्रत्यक्षवचनप्रसिद्धो न साधनीयः। पुरोडाशानां पशुतन्त्रमध्ये विधानं तु साधनीयम्। अतः प्रथमापञ्चम्योर्व्यत्यासेनार्थो ग्राह्यः पशोर्विप्रकर्षात्प्रातरादिकालत्रयव्यापित्वात्पुरोडाशानां पशुतन्त्रमध्ये विधानमिति। वेदव्यासनिरता हि महर्षयस्तद्व्यासवासनाक-

शाख्रायो वेदानुसारेण स्वकृतेष्वपि ग्रन्थेषु शब्दान्प्रयुञ्जते । अतो जैमिनिना 'नाभ्या आसीदन्तरिक्षम्' इति श्रुतौ प्रथमा-पञ्चम्योर्व्यत्ययं दृष्ट्वा तद्वदिदं सूत्रं कृतमिति । अत्र मध्यभागे गगनत्वाध्यवसायरूपयातिशयोक्त्योत्थापितोऽनुमानालंकारः । उत्तरवाक्यं तदुपपादकं तस्याप्युपपादकं तदुत्तरवाक्यमिति काव्यलिङ्गम । एतेषां च संकरः । नाभ्या इति श्रुतीत्यत्र श्रुच्छब्दात्संपदादिक्विबन्तात्सप्तमी ॥ ५९ ॥

आरोपमध्यवसितिं च विना तवास्यां
नाभौ सरःपदमुपैतु कथं न वृत्तिम् ।
साक्षादियं सरसिजस्य समुद्रशायि-
न्नुत्पत्तिभूरिति हि नायक नायमूहः ॥

प्रसिद्धादुपमानादुपमेयस्य भेदमनूद्य तद्रूप्यमात्रकल्पन-मारोपः । यथा 'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः' इति । तस्य प्रसिद्धोपमानाभेदकल्पनमध्यवसायः । यथा 'अवतीर्य हरिः साक्षादेष रक्षति मेदिनीम्' इति । अन्येषां नाभौ तदु-पमानवाचकपदमारोपेणाध्यवसायेन वा प्रवर्तते न तु वाचक-तयेति वस्तुस्थितिः । सा भगवन्नाभावन्यथा क्रियते । आरो-पमध्यवसितिं च विनैव तवास्यां नाभौ सरःपदं वृत्तिं प्रवृत्तिं कथं नोपैतु? प्राप्तुमर्हत्येव । हे समुद्रशायिन्, नायक स्वा-

मिन्, इयं तव नाभिः साक्षात्सरसिजस्य उत्पत्तिभूरिति नायमूहः, किं तु प्रत्यक्ष एवायमर्थः । अतो मुख्यसरसिजोत्पत्तिभुवस्तव नाभेर्मुख्यमेव सरस्त्वं युक्तमित्यर्थः । अत्र सरसिजयोनित्वेन मुख्यसरःपदवाच्यत्वं साध्यत इत्यनुमानालंकारः । तद्द्वारा नाभौ सरस्त्वरूपणं गम्यमिति रूपकध्वनिः । नायमूह इति निर्ज्ञातनिषेधानुवादेनातिस्पष्टत्वं व्यज्यते । साक्षादित्यनेनाप्याविष्क्रियत इति प्रतिषेधालंकारः, 'प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् । विशेषणान्तरद्योत्यविशेषव्यक्तिकारणम् ॥ न विषेण न शस्त्रेण नाग्निना न च मृत्युना । अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥' इति तल्लक्षणोदाहरणयोस्तत्सिद्धेः ॥ ६० ॥

**कल्पान्तरेषु वितर्तिं कमलासनानां**
**भूयोऽपि कर्तुमिव भूरि रजो दधानम् ।**
**नाभिह्रदे समुदितं नलिनं तवैत-**
**द्भूयात्सदैव मम भूतिकरं मुरारे ॥ ६१ ॥**

हे मुरारे, कल्पान्तरेषु भविष्यत्सु कमलासनानां वितर्तिं कर्तुमिव भूरि रजः परागम्, पक्षे कमलासनसृष्ट्युपयुक्तं रजोगुणं दधानं तव नाभिह्रदे समुत्पन्नमेतन्नलिनं सदैव मम भूतिकरं भूयात् । 'नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां

पतिः । यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ॥' इति सकललोकसंनिवेशात्मकावयवसंस्थानशालि भगवन्नाभिनलिनं सर्वविधभूतिप्रदानसमर्थमित्येवमाशास्यते । अत्र रजःशब्दश्लेषोत्थापितः फलोत्प्रेक्षालंकारः । तस्य नाभिह्रदरूपकेण संसृष्टिः ॥ ६१ ॥

**उल्लासयत्युदरबन्धनिबद्धदिव्य-**
**शोणाश्मरश्मिकलिकावलिरच्युतैषा ।**
**आगाम्यनेकशतकल्पविधातृगर्भ-**
**नाभ्युद्गताम्बुरुहकुट्मलपङ्क्तिशोभाम् ॥**

हे अच्युत, एषा उदरबन्धाख्ये भूषणे निबद्धानां शोणाश्मनां रश्मिकलिकाः कलिकाकारा ऊर्ध्वप्रसृता रश्मयः किरणाः तेषामावलिः पङ्क्तिः आगामिनामनेकशतसंख्यानां कल्पानां स्रष्टृत्वेन स्रष्टव्या ये विधातारः त एव गर्भा गर्भस्था येषां तथाभूतानां नाभेरुद्गतानामम्बुरुहकुट्मलानां पङ्क्तेः शोभामुल्लासयत्युत्पादयति । अत्र यद्यपि कुट्मलपङ्क्तिशोभामित्यत्र असंभवद्वस्तुसंबन्धनिबन्धना निदर्शना प्रतिभाति, तथापि वर्णितकुट्मलपङ्क्तिरूपस्योपमानस्य लोकसिद्धत्वाभावात्कविना संभाव्यमानत्वाच्चोत्प्रेक्षायामेव पर्यवसानम् । 'गर्भो-

ऽपवरकालये । अग्नेऽग्नौ कुक्षिकुक्षिस्थजन्तौ पनसकण्टके ॥'
इति केशवः ॥ ६२ ॥

ऊर्ध्वं विरिञ्चिभवनात्तव नाभिपद्मा-
द्रोमावलीपदजुषस्तमसः परस्तात् ।
मुक्तौघमण्डितमुरःस्थलमुन्मयूखं
पश्यामि देव परमं पदमेव साक्षात् ॥

विरिञ्चेर्भवनादुत्पत्तिस्थानात्, पक्षे निकेतनात् नाभिपद्मादूर्ध्वं रोमावलीपदजुषः रोमावलीति शब्दं भजतः तमसः परस्तात्, मुक्तानां मौक्तिकानाम्, पक्षे मुक्तिभाजामोघेन समूहेन मण्डितम् उन्मयूखमुज्ज्वलं तव उरःस्थलं साक्षात्परमं पदमेव पश्यामि उत्प्रेक्षे । अत्र भवनतमःशब्दश्लेषेण रोमावलीति नाममात्रेण भेदो वस्तुतस्तु तम एवेत्यतिशयोक्त्या चोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ ६३ ॥

सालैरुदंशुचयरत्नललन्तिकाख्यैः
स्फीतोल्लसत्कुसुमया वनमालया च ।
विभ्राजते विपुलमेतदुरस्त्वदीय-
मन्तःपुरं जलधिराजकुमारिकायाः ॥६४॥

उदंशुचया ऊर्ध्वप्रसृतकिरणनिकरा या रत्नललन्तिकाः स्यूतैः पद्मरागरत्नैः मौक्तिकैरिव कृतानि लम्बमानानि कण्ठा-

धरणानि । 'ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका । स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ॥' इत्यमरः । इह रत्नमात्रोक्तावपि प्राकाराकृतिनिर्वाहौचित्यात्पद्मरागरत्नानि ग्राह्याणि, ऊर्ध्वरश्मिरधोरश्मिः पार्श्वरश्मिश्च यः क्रमात् । पद्मरागः स विज्ञेय उत्तमाधममध्यमः ॥' इति रत्नशास्त्रे पद्मरागाणामूर्ध्वप्रसृतकिरणत्वाभिधानात् । तदाख्यैः रत्नललन्तिका इत्याख्यामात्रेण भिन्नैः सालैः प्राकारैः, स्फीतोल्लसत्कुसुमया समृद्धविकसत्पुष्पया वनमालया वैजयन्त्या पक्षे उपवनपङ्क्त्या च विपुलम् एतत्त्वदीयमुरःस्थलं जलधिराजकुमारिकाया अन्तःपुरं विभ्राजते । 'भ्राजृ दीप्तौ'। अत्रातिशयोक्तिश्लेषोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ ६४ ॥

**प्रालम्बिकामुपगतास्तव पद्मरागाः**
**प्रत्यग्रघर्मकरमण्डलनिर्विशेषाः ।**
**पर्यङ्कके वरद वक्षसि भान्ति लक्ष्म्याः**
**क्रीडोपबर्हतिलका इव पार्श्वभाजः ॥**

हे वरद, तव प्रालम्बिकां लम्बमानसुवर्णकण्ठभूषाम् । 'लम्बनं स्याल्ललन्तिका' इत्येतदनन्तरम् 'स्वर्णैः प्रालम्बिका' इत्यमरः । तामुपगताः प्राप्ताः प्रत्यग्रादभिनवाद्धर्मकरमण्डलात्सूर्यबिम्बान्निर्विशेषाः विशेषरहिताः तत्समानाः पद्म-

रागाः लक्ष्म्याः पर्यङ्कके तव वक्षसि पार्श्वभाजः पर्यङ्कपार्श्वद्वयनिवेशिताः क्रीडोपबर्हतिलकाः क्रीडार्थास्तिलकवद्वर्तुलाकारा उपबर्हा उपधानानीव भान्ति । 'उपधानं तूपबर्हः' इत्यमरः । उपमारूपकोत्थापित उत्प्रेक्षालंकारः ॥ ६५ ॥

**अस्तु त्रयीमयतनुस्तव लम्बनाली-**
**रत्नैस्तिरस्क्रियत एव तथापि भानुः ।**
**सोढः सतां बत निशान्तमुपागताना-**
**मेवं तिरस्कृतिकृदीश्वर कः सुवृत्तैः ॥**

भानुस्त्रयीमयतनुरस्तु नाम । तथापि तव लम्बनालीरत्नैः ललन्तिकापङ्क्तिनिबद्धैररुणमणिभिः तिरस्क्रियतेऽभिभूयत एव। त्रयीविद्यस्याप्यभिभवमौचित्येनोपपादयति— निशान्तं निशाया अवसानं प्रभातम्, पक्षे गृहम् उपगतानां प्राप्तानां सतां सत्पुरुषाणाम्, पक्षे नक्षत्राणाम् एवं तिरस्कृतिकृत् भानुवदभिभवकारी कः सुवृत्तैः शोभनस्वरूपैः सुष्ठु सम्यग्वर्तुलैर्वा, पक्षे सुचरितैः साध्वाचारैः सोढः? 'आचारहीनं न पुनन्ति वेदाः' इति स्मृतेः । सकलवेदविदप्याचारहीनः प्राज्ञानामनादरणीय इति भावः । अत्र रत्नैस्तिरस्क्रियत इत्यतिशयोक्तिः । निशान्तसुवृत्तशब्दश्लेषोत्थापितः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । स च समासोक्तिगर्भ इति संकरः । 'नक्षत्रं सन्नपुंसकम्' इति केशवः । 'वृत्तं स्व-

रूपे चरिते वृत्तं छन्दोविधासु च । त्रिष्वतीते दृढे वीध्रे वर्तुलेऽपि च दृश्यते ॥' इति यादवः ॥ ६६ ॥

**नष्टेऽपि भस्मनि वने गिरिशेन दग्धं**
**स्त्रीणां हृदीश मदनं प्रतिबोधयन्तः ।**
**भस्मोच्चये कृतकचप्रतिबोधनं तं**
**शुक्रं जयन्तु न कथं तव हारताराः ॥**

हे ईश, गिरिशेन दग्धं मदनं भस्मनि तद्देहभस्मनि वने स्थाणुवने नष्टेऽपि तत्रैव वाय्वादिविक्षिप्तत्वेनादर्शनं गतेऽपि स्त्रीणां हृदि प्रतिबोधयन्तः उद्दीपयन्तः, पक्षे दग्धं मदनं पुनरप्युज्जीवयन्तः तव हारताराः हारस्यूतानि शुद्धमुक्ताफलानि । 'तारस्तु शुद्धमुक्तायाम्' इति केशवः । भस्मोच्चये भस्मराशौ कृतकचप्रतिबोधनं कृतं कचस्य प्रतिबोधनं पुनः संजीवनं येन तथाभूतं शुक्रं कथं न जयन्तु नाभिभवन्तु? जयन्तीत्येतदुचितमेव । 'जि अभिभवे' इति धातुः सकर्मकः । कचो नाम बृहस्पतेः पुत्रो मृतसंजीवनीविद्यां प्राप्तुं शुक्रं शुश्रूषमाणस्तदसहमानैरसुरैः पुनः पुनर्मारितः शुक्रेण पुनः पुनः संजीवितः । पश्चादसुरास्तं मारितं भस्मीकृतं सुरायां मिश्रीकृत्य शुक्राय ददुः । तत्पानेन स्वोदरं प्रविष्टे भस्मनि तत्रैव शुक्रः कचमुज्जीवयामास । ततः स्वोदर एव स्थिताय

कचाय मृतसंजीवनीं विद्यामुपदिदेश । स्वोदरं विदार्य निर्गतेन कचेन मृतः शुक्रः पुनरुज्जीवित इति महाभारते कथा । एवं मृतस्य भस्मान्वीक्ष्यैव मृतमुज्जीवयतः शुक्रात्तद्भस्मानपेक्ष्यैव यत्र कचिद्भस्मीकृतमन्यत्र संजीवयन्ति हारमौक्तिकानीत्युचितं शुक्रजयनमिति भावः । अत्र स्त्रीणामनुरागस्य साक्षान्मदनत्वेनाध्यवसायादनुरागोद्दीपनस्य मदनपुनःसंजीवनत्वेनाध्यवसायाच्चातिशयोक्तिः । तदुत्थापितश्च मौक्तिकानां शुक्रादाधिक्यरूपो व्यतिरेकालंकारः ॥ ६७ ॥

उत्प्रेक्षयत्यधिभुजान्तरमुल्लसन्ती
पार्श्वद्वये परमपूरुष हारमाला ।
तत्रत्यकान्तिसरितस्तरलैः प्रणुन्ना-
मूर्म्युत्करैरुभयतः सितफेनपङ्क्तिम् ॥

हे परमपूरुष, तव अधिभुजान्तरं भुजान्तरस्य वक्षसः । षष्ठीविभक्त्यर्थेऽव्ययीभावः । पार्श्वद्वये उल्लसन्ती भ्राजमाना हारमाला मुक्तागुणानां पङ्क्तिः तत्रत्यकान्तिसरितः वक्षसि प्रवहन्त्याः कान्तेरेव सरितः तरलैश्चञ्चलैः ऊर्म्युत्करैः तरङ्गनिकरैः उभयतः तीरद्वये प्रणुन्नां क्षिप्तां सितानां फेनानां पङ्क्तिम् उत्प्रेक्षयति । अत्र कान्तिसरित इति रूपकेण

कान्तिविवृद्ध्यावृम्युत्करत्वाध्यवसायरूपयातिशयोक्त्या चोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ ६८ ॥

त्वां सर्वभूतमयमाश्रितसर्ववर्णं
यद्वैजयन्त्युपगताच्युत सर्वगन्धम् ।
तेनैव किं त्रिभुवनैकमहावदान्य
सारूप्यमावहति ते सकलाभिनन्द्यम् ॥

हे. त्रिभुवनैकमहावदान्य अच्युत, सर्वभूतमयं सर्वेषां प्राणिनामन्तरात्मतया सर्वभूतात्मकम् आश्रिताः सर्वे वर्णा विप्रादयो यं तथाभूतं सर्वगन्धम् 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इति श्रुतेः सर्वविधादिव्यसौरभशालिनं त्वां वैजयन्ती उपगता समाश्रितेति यत् तेनैव हेतुना सकलाभिनन्द्यं ते तव सारूप्यम् आवहति बिभर्ति किम् ? वैजयन्त्यपि 'पञ्चरूपा तु या माला वैजयन्ती गदाभृतः । सा भूतहेतुसंघातभूता माला च वै द्विज ॥' इति वचनात्पृथिव्यादिसर्वभूतमयी आश्रितसर्ववर्णा च । पृथिव्यादीनामागमेषु पीतशुक्लरक्तकृष्णधूम्रवर्णध्यानविधानाद्धूम्रवर्णो यद्यपि रक्तमिश्रकृष्णवर्णरूपः तथापि स एव हरितवर्णस्थाने कथंचन द्रष्टव्यः । यद्वा वैजयन्त्यां भूतात्मकानि पुष्पाणि रत्नपुष्पाणि रत्नेषु च वज्रमुक्ताफलपद्मरागेन्द्रनीलगारुत्मतानि प्रशस्ता-

नीति ताद्रूप्यात्सर्ववर्णता । नवसु रत्नेषूक्तानां पञ्चानां प्राशस्त्यं च रत्नशास्त्रेऽभिहितम्— 'व्युप्तानि वज्रवरमौक्तिकपद्मरागगारुत्मतोपलसुरेश्वररत्नवर्यैः । धार्याणि भूपतिभिराभरणानि लक्ष्मीसौभाग्यदान्यपररत्नकृतानि नैवम् ॥ वैदूर्यगोमेधकपुष्परागप्रवालरत्नानि तथा नृपाणाम् । शोभावहान्यल्परुचीनि सार्धं तैर्धारितानि श्रियमावहन्ति ॥' इति । यद्यपि 'श्वेतालोहितपीतमेचकतया च्छायाश्चतस्रः क्रमात्' इति वज्रस्य वर्णचतुष्टयमुक्तं तथापि पीतवर्णमेव प्रशस्तम्, 'वज्रं विद्युत्प्रभं स्निग्धं सुन्दरं लघुलेखनम् । षडरं तीक्ष्णधारं च सुसौम्यारं श्रियं दिशेत् ॥' इति वचनात् । इत्येवं वैजयन्ती सर्ववर्णा सर्वविधसौरभयुक्ता च भगवद्धार्यपुष्पदामत्वात् । एवं श्लेषमूलभगवत्सारूप्यप्राप्तौ तत्समाश्रयणस्य हेतुत्वसंभावनाच्छ्लेषोत्थापितो हेतूत्प्रेक्षालंकारः ॥ ६९ ॥

**ताराभिरामपरिणाहलसत्सिताभ्रं**
**तापिञ्छमेचकमुरःशरदन्तरिक्षम् ।**
**प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः**
**पूर्णां बिभर्ति पुरुषोत्तम कान्तिरेखाम् ॥**

हे देव पुरुषोत्तम, तारैः शुद्धमौक्तिकैः आभिरामे परिणाहे विस्तारे लसन्सिताभ्रोऽनुलेपनकर्पूरो यस्य तत्तथो-

क्तम् । 'परिणाहो विशालता' इति 'घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इति चामरः । अन्तरिक्षपक्षे तारा-भिर्नक्षत्रैरभिरामे परिणाहे लसन्ति सिताभ्राणि शुभ्रमेघा यस्य तत्तथोक्तम् । तापिञ्छमेचकं तमालश्यामलम् । 'का-लस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । तव उर एव शरदन्तरिक्षं प्राप्यैव कौस्तुभ एव पूर्णचन्द्रः पूर्णां कान्तिरेखां कान्त्यतिशयं बिभर्ति । निरन्तरालपङ्क्तिवाचिना रेखाशब्देना-तिशयो लक्ष्यते । 'रेखा त्वकृत्रिमे मार्गे हस्तपादतलादिषु । निरन्तरालपङ्क्तौ च' इति केशवः । यथा शरदन्तरिक्षं प्राप्त एव चन्द्रः पूर्णां कान्तिं बिभर्ति एवं भगवदुरःस्थलं प्राप्त एव कौस्तुभ इति तात्पर्यम् । अत्र शरदन्तरिक्षमित्यत्र रूपकसमासः; न तूपमितसमासः, तापिञ्छमेचकमित्यादि-सामान्यप्रयोगात् । तदनुरोधादन्यत्रापि रूपकसमास इति श्लेषानुप्राणितो रूपकालंकारः ॥ ७० ॥

**नाभीसरोजकिरणैर्मणिराजभाभि-**
**रात्मप्रभाभिरपि संवलितं विभाति ।**
**श्रीवत्सविग्रहजुषः प्रकृतेस्त्वदीयं**
**वक्षः परीतमिव सत्त्वरजस्तमोभिः ॥**

नाभीसरोजस्य किरणैः मणिराजस्य कौस्तुभस्य भाभिः आत्मनः स्वस्य प्रभाभिश्च संवलितं त्वदीयं वक्षः श्रीवत्सविग्रहजुषः श्रीवत्सरूपं प्राप्तायाः प्रकृतेः त्रिगुणायाः गुणैः सत्त्वरजस्तमोभिः परीतमिव विभाति । केचिन्नाभिसरोजं धवलं वर्णयन्ति । यथा— 'नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः' इति मुरारिनाटके । हरिवंशे त्वरुणं वर्णितम्— 'हुताशनज्वलितशिखोज्ज्वलत्प्रभं समुत्थितं शरदमलार्कतेजसम् । विराजते कमलमुदारवर्चसं महात्मनस्तनुरिव चारुदर्शनम् ॥' इति । कौस्तुभं धवलं केचिद्वर्णयन्ति । यथा नैषधचरिते— 'हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटासीदूर्णमर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम्' इति । हरिवंशे तु— 'अस्यैव देवस्य हरेः स्तनान्तरे विराजते कौस्तुभरत्नदीपः' इति दीपसाम्येनारुणो वर्णितः । प्रपञ्चसारे तु श्यामल इति तद्ध्यानमुक्तम् । अनेन अनेकधा प्रसिद्धत्वात्कौस्तुभनाभीकमलयोः क्वचन क्वचन श्लोके कश्चन कश्चन वर्णो वर्ण्यते, 'न तत्तत्त्वं न तच्छास्त्रं न सा विद्या न सा कला । यन्न काव्याङ्गतां याति काव्यं सर्वात्मकं यतः ॥' इति काव्यस्य सर्वमतसाधारण्यवचनात् । अतोऽत्र न पूर्वापरविरोधः शङ्कनीयः । श्रीवत्सः प्रकृतिरूप इति विष्णुपुराणे दर्शितम्— 'श्रीवत्ससंस्थानमयमनन्ते च समाश्रितम् । प्र-

धानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥' इति । स च वक्षसि दक्षिणभागगतो बिल्वरूपो लाञ्छनविशेष इति सार्वभौमः प्रवादः । हरिवंशे—'श्रीवत्सेनोरसि श्रीमान्रोमजालेन राजते' इति रोमावर्त इत्युक्तम् । वामनपुराणे भूषणाविशेष इति सूचितम् । तत्र हि श्रीदामनामानमसुरमधिकृत्योक्तम्—'निःश्रीकास्तु त्रयो लोकाः कृतास्तेन दुरात्मना । श्रीवत्सं वासुदेवस्य हर्तुमैच्छन्महाबलः ॥' इति । कण्ठभूषणत्वमप्युक्तं तत्रैव विष्णुपञ्जरस्तोत्रे—'वैजयन्तीं प्रगृह्याथ श्रीवत्सं कण्ठभूषणम् । वायव्यां रक्ष मां देव अश्वशीर्ष नमोऽस्तु ते ॥' इति । अत्र स्वरूपोत्प्रेक्षालंकारः । 'अजामेकां लोहितशुक्लकृष्णाम्' इति सत्त्वादीनां शुक्लारुणकृष्णवर्णत्वश्रवणादेवमुत्प्रेक्षा ॥ ७१ ॥

**वक्षःस्थलं वरद नन्दनमाश्रितस्ते**
**येषां विभाति हरिचन्दन एष मध्ये ।**
**एते चतुर्भुज भुजास्तव तस्य शाखाः**
**शङ्के कराब्जदलकोमलिताग्रभागाः ॥**

हे वरद चतुर्भुज, नन्दनं सर्वेषां परमानन्दकरम्, पक्षे नन्दनवनं ते तव वक्षःस्थलमाश्रितः एष हरिचन्दनः हरिचन्दनाङ्गरागः, पक्षे हरिचन्दनाख्यः कल्पवृक्षः येषां मध्ये

विभाति, तवैते समीपतरवर्तिनः भुजाः चत्वारो बाहवः कराब्जदलकोमलिताग्रभागाः करा एवाब्जदलानि तैः कोमलिता अग्रभागा यासां तास्तथाभूताः तस्य हरिचन्दनस्य शाखा लता इति शङ्के उत्प्रेक्षे । अत्र स्वरूपोत्प्रेक्षाया हरिचन्दनादिशब्दश्लेषेण कराब्जदलेति रूपकेण च संकरः । कराब्जेत्यत्र यद्युपमितसमासस्तदोपमया संसृष्टिः । यदि मयूरव्यंसकादिसमासस्तदा दण्डद्युक्तप्रकारेण रूपकरूपकम् । 'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलता नर्तकी तव । लीलानाट्यामृतं दृष्ट्योर्यूनां सखि निषिञ्चति ॥' इति हि तदीयं रूपकरूपकोदाहरणम् । उभयथा संदेहे तु संदेहसंकरः । 'हरिचन्दनमस्त्री स्याद्देवानां पादपान्तरे चन्दने ताम्रसारे च पीतचन्दनसंज्ञके ॥' इति केशवः ॥ ७२ ॥

जात्यैव यद्वरद पल्लवराग एष
यल्लाल्यते च भवता कटके निवेश्य ।
मन्ये मणिस्तदुपगम्य मदान्धभावं
साक्षादयं सवितुरेव करोत्यवज्ञाम् ॥७३॥

माणिक्यस्य चातुर्वर्ण्यरूपाश्चतस्रो जातयः पद्मरागकुरुविन्दसौगन्धिकनीलगन्धिभेदात् । तानि क्रमाद्रक्तमातिरक्तभीषत्पीतप्रभं पिञ्जरमीषन्नीलप्रभं धूम्रं च रत्नशास्त्रविदो वर्ण-

यन्ति । तत्र कुरुविन्दस्य पल्लवराग इति नामान्तरम् । अत एव 'प्रचक्रमे पल्लवरागताम्रा' इति कालिदासश्लोकव्याख्याने पल्लवरागो रत्नविशेषे योगरूढ इति चक्रवर्तिनोक्तम् । इह करकङ्कणस्थः स मणिर्वर्ण्यते । हे वरद, एषः अयं मणिः जात्यैव पल्लवराग इति यत्, यच्च भवता कटके निवेश्योपलाल्यते तत्तेन हेतुना मदान्धभावमुपगम्य एत्य साक्षात्प्रत्यक्षं पुरत एव सवितुः सूर्यस्यैव, पक्षे पितुरेव अवज्ञां करोति । प्रभया सूर्यं च परिभवतीत्ययं सूर्यस्य तिरस्कारः । यः खलु जन्मप्रभृत्येव पल्लवेषु विटेषु रज्यति राज्ञः कटके सैन्ये समधिकृतश्च स मदेनान्ध्यं कृत्याकृत्यविवेकाभावं प्राप्य साक्षात्पितुरप्यवज्ञां कुर्यादेव । अत्र पल्लवरागकटकसवितृशब्दश्लेषेणोत्थापितो हेतूत्प्रेक्षालंकारः । मन्य इति तद्व्यञ्जकः शब्दः । सवितुरेवेत्येवकारेणान्येषामवज्ञां करोतीति किमु वक्तव्यमित्यर्थापत्त्यलंकारश्च गम्यते । 'जातिः समूहे मालत्यां सामान्ये जन्मगोत्रयोः' 'पल्लवोऽस्त्री किसलये पत्रमात्रप्रकोष्ठयोः । विस्तारे विटपे चाथ रभसे संवलेऽपि च । पुंलिङ्गस्तु भवेत्षिङ्गे' 'कटकस्त्वस्त्रियां शैलनितम्बे वलयेऽपि च । सैन्ये च राजधान्यां च' इति केशवः । पल्लवेषु रागोऽस्येति सप्तमीगर्भो बहुव्रीहिः ॥ ७४ ॥

ऐन्द्रोपलप्रभमधो भुजदण्डनाल-
मेकत्र चक्रमपरत्र च शङ्खहंसम् ।
दृष्ट्वा कथं न कलयेमहि कान्तिसिन्धो-
रुत्फुल्लपद्मयुगमूर्ध्वकरद्वयं ते ॥ ७५ ॥

अधः अधस्तात् ऐन्द्रोपलप्रभमिन्द्रनीलमाणिप्रभं भुजदण्ड-मेव नालम्, एकत्र करे चक्रं सुदर्शनम्, पक्षे चक्रवाकम्, अपरत्र करे शङ्खमेव हंसं च दृष्ट्वा कथं ते तव ऊर्ध्वकरद्वयं कान्तिसिन्धोः संबन्धि उद्गतं उत्फुल्लपद्मयुगं न कलयेमहि? तथा कलयितुं युक्तमेव । अत्र रूपकैः चक्रशब्दश्लेषेण इन्द्रो-पलप्रभमित्युपमया चोत्थापितः स्वरूपोत्प्रेक्षालंकारः, नाला-दिलिङ्गादनुमानालंकारो वा ॥ ७५ ॥

चन्द्रार्कचारुतरशङ्खरथाङ्गशोभा-
संभाव्यरात्रिदिवसात्मकपार्श्वयुग्मम् ।
नक्षत्रदृश्यनवमौक्तिकहारिरूपं
मन्ये महापुरुषरूपधरं भवन्तम् ॥ ७६ ॥

चन्द्रार्कयोरिव चारुतरयोः शङ्खरथाङ्गयोः शोभया संभा-व्यरात्रिदिवसात्मकं संभावनायोग्यरात्रिदिवसस्वभावशालि पा-र्श्वयुग्मं यस्य स तथोक्तः तम्, नक्षत्रैरिव दृश्यैः नवमौक्ति-कैः हारि मनोहरं रूपं यस्य स तथोक्तः तमेवंभूतं भवन्तं

महापुरुषरूपधरम् 'वेदाहमेतं पुरुषं महान्तम्' इत्युक्तस्य महापुरुषस्य यद्रूपं वर्णितम् 'अहोरात्रे पार्श्वे' 'नक्षत्राणि रूपम्' इति तस्य धारकं तद्रूपमास्थाय संनिदधानं मन्ये । अत्रोपमारूपकोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥ ७६ ॥

संवर्तजृम्भितविकर्तनदुर्निरीक्षं
पश्यामि दक्षिणकरे तव चक्रराजम् ।
दैत्यौघसिन्धुपतिमन्थमहाचलस्य
बाहोः प्रतापघनमिद्धमिवोद्गतं ते ॥

तव दक्षिणकरे संवर्ते प्रलये जृम्भितं विकर्तनं सूर्यमिव दुर्निरीक्षं चक्रराजं चक्राणां राजानं सुदर्शनं दैत्यौघ एव सिन्धुपतिर्नदीपतिः तस्य मथने मन्थमहाचलस्य मन्थानरूपमहाशैलस्य त्वद्बाहोः इद्धं दीप्तं प्रतापघनं प्रतापस्य कठिनीभावमिव पश्यामि । 'घनाः कठिनसंघातमेघकाठिन्यमुद्गराः' इति केशवः । अत्रोपमारूपकोत्थापितः स्वरूपोत्प्रेक्षालंकारः ॥

आभाति देव विधृतस्तव सव्यपाणा-
वन्तर्बहिश्च शुचिरच्युत पाञ्चजन्यः ।
अन्तेवसन्निव गलस्य गुरोर्गभीर-
ध्वानक्रियोपनिषदध्ययनार्थमेषः ॥ ७८ ॥

हे देव अच्युत, तव सव्यपाणौ स्थितः अन्तर्बहिश्च शुचिः धवलः, शिष्यपक्षे मानसकायिकशुद्धियुक्तः एष पाञ्चजन्यः पाञ्चजन्यनामा शङ्खः गभीरा ध्वानक्रियैव उपनिषद्रहस्यविद्या तदध्ययनार्थं गुरोः पीवरस्य, पक्षे आचार्यस्य गलस्य अन्ते समीपे वसन् शिष्य इव आभाति प्रकाशते। अत्र शुचिगुरुशब्दश्लेषेण अध्ययनार्थमिति फलोत्प्रेक्षया चोत्थापितः स्वरूपोत्प्रेक्षालंकारः। 'अथ स्याच्छुचिरीशाने सूर्ये चन्द्रेऽग्नि-शुक्लयोः' इति केशवः ॥ ७८ ॥

कौमोदकी स्फुरति ते करपल्लवाग्रे
वैरिश्रवाक्यविकृतेव सरस्वती सा।
त्रिस्रोतसस्तव पदाब्जभुवो विशेष-
माकाङ्क्ष्य पाणिकमलात्तव निःसरन्ती ॥

ते तव करपल्लवाग्रे करपल्लवस्याग्रे कौमोदकी नाम गदा तव पदाब्जभुवः त्रिस्रोतसः गङ्गायाः विशेषं तदपेक्षया स्वस्योत्कर्षमाकाङ्क्ष्य तव पाणिकमलात् निःसरन्ती नदीरूपेण प्रवहन्ती सरस्वतीव भाति। कौमोदकी पपञ्चसारे पीतवर्णा वर्णिता—'चक्रं शङ्खगदाम्बुजकौस्तुभमुसलाः सखङ्गवनमालाः। रक्ताच्छपीतकनकश्यामलकृष्णाग्निशुक्लभासः स्युः ॥' इति। अतः सरस्वतीनदीत्वोत्प्रेक्षा। सरस्वत्या गङ्गापेक्षया

हेतुगर्भविशेषणं वैरिञ्चवाक्यविकृतेति । इत्थं ब्रह्माण्डपुराणे कथा— लक्ष्मीसरस्वतीभक्तौ कौचिद्द्विजौ स्वस्वदेवतोत्कर्षे विवदमानौ ब्रह्माणमुपससृपतुः । ब्रह्मा च लक्ष्मीरुत्कृष्टेत्युवाच । तेन सरस्वत्यतिमात्रं रुष्टा बभूवेत्येवं पौराणिकी प्रसिद्धिः सेति पदेन निबद्धा । अत्र पदार्थहेतुककाव्यलिङ्गानुप्राणितः स्वरूपोत्प्रेक्षालंकार इति तेन तस्याः संकरः । करपल्लवाग्रुपमाभिस्तु संसृष्टिः । करपल्लवाग्रशब्दस्य कृत्स्नस्यापि करपरतया प्रयोगे तु न तत्रोपमा । 'बाहुर्बाहा भुजः पाणिर्भरणं करपल्लवः' इति यादवः । 'अथ ना करपल्लवः । बाहौ किसलयप्रख्यकरेऽप्येष नृषण्डयोः' इति केशवः ॥ ७९ ॥

हस्ते विराजति तवाभयमुद्रितेऽस्मि-
न्नव्याजकोमलरुचिप्रकराभिरामे ।
वज्रोर्मिकांशुनिकरः कमलाधिराज्य-
पट्टाभिषेकसलिलौघ इवावदातः ॥ ८० ॥

हे जनार्दन, अभयमुद्रिते अभयाभिनयेन संजातमुद्रे अव्याजकोमलेन अलंकारादिहेत्वन्तरमनपेक्ष्य हस्तसौन्दर्यावहेन रुचिप्रकरेण प्रभासमूहेन अभिरामे तव हस्ते अवदातः शुभ्रवर्णः पीतवर्णो वा । 'अवदातः सिते पीते प्रधाने शुद्ध एव वा' इति केशवः । वज्रोर्मिकांशुनिकरः प्रत्युप्तवज्रम-

रितानामङ्गुलीयकानां किरणसमूहः कमलाधिराज्ये अस्य हस्तस्य सकलकमलाधिराजभावे निमित्ते यः पट्टाभिषेकः तदर्थः सलिलानामोघः समूहः परम्परेव विराजति । 'ओघः परम्परायां स्याज्जलस्रोतसि संचये' इति केशवः । पट्टाभिषेकार्थमपि जलमवदातं शुद्धं भवति, सरित्समुद्रादिभ्यस्तस्याहरणीयत्वात् । स्वरूपोत्प्रेक्षालंकारः । अत्र सकलकमलातिशायिनी शोभा व्यज्यते । कोमलशब्दात्सौन्दर्यलाक्षणिकात्कोमलं करोतीत्यर्थे तत्करोतीति ण्यन्तात्पचाद्यचि 'णेरनिटि' इति णिलोपे च सत्ययं कोमलशब्दः सौन्दर्यावहवाची ॥ ८० ॥

अभयमुद्रावत्स्वामिना वरमुद्रा किमिति न धार्यत इत्याकाङ्क्षायामिदमुच्यते—

**नामैव ते वरद वाञ्छितदातृभावं**
**व्याख्यात्यतो न वहसे वरदानमुद्राम् ।**
**न ह्यागमोदितरसः श्रुतिसिद्धमर्थं**
**लिङ्गेन बोध्यमुररीकुरुते विपश्चित् ॥८१॥**

हे वरद, ते तव नामैव वाञ्छितदातृभावं सकलभक्तजनेष्टार्थदातृत्वं व्याख्याति विशेषेणाख्याति स्पष्टमाचष्टे । अतो हेतोर्वरदानमुद्रां न वहसे । उक्तमर्थमर्थान्तरन्यासेन समर्थ-

यते— आगमोदितरसः आगमे वेदे उत्पन्नादरः विपश्चित् मीमांसान्यायालोचनेन दृढं वैदुष्यं प्राप्तः श्रुतिसिद्धमर्थं श्रुतिलिङ्गादीनां मध्ये प्रथमप्रमाणभूतया श्रुत्या निश्चितं प्रमेयं लिङ्गेन श्रुतिमुखनिरीक्षकतया ततो विलम्बितप्रवृत्तिकेन द्वितीयप्रमाणेन बोध्यं बोधनीयं न धुररीकुरुते नाङ्गीकरोति । 'अर्थिभ्यो वै वरं दत्ते प्रणतार्तिविनाशनः । आख्यां वरदराजेति ययौ नित्यं कृतार्थयन् ॥' इति वामनपुराणे भगवतो वरदनाम निरुक्तम् । अतोऽभिधानश्रुत्या प्रसिद्धं वरदातृत्वं न वरमुद्रालिङ्गेन बोधनीयमिति सा न धृतेत्यर्थः । भगवानप्यागमोदितरसः । 'रसो वै सः । रसँ ह्येवायं लब्ध्वानन्दी भवति' इत्यागमप्रतिपादितरसः, विपश्चित् 'ब्रह्मणा विपश्चितेति' इति मन्त्रवर्णात् । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । स च श्लेषानुप्राणित इति संकरः ॥ ८१ ॥

आभाति मौक्तिकगुणग्रथितैरनल्पै-
नीलोत्पलैर्वलयितस्तव नाथ कण्ठः ।
संवर्तमेघवसतिं ध्वननैस्तदन्त-
र्निश्चित्य तन्निकटगैरिव मेघडिम्भैः ॥

हे नाथ, मौक्तिकगुणग्रथितैः मौक्तिकसराणामन्तरालेषु

स्यूतैः अनल्पैः स्थूलैः नीलोत्पलैर्वलयितः तव कण्ठः ध्वननैः महामेघगर्जितनिभैः कण्ठध्वनिभिः तस्यान्तः संवर्तमेघानां वसतिं निश्चित्य तन्निकटगैः तत्समीपं प्राप्तैः मेघडिम्भैः मेघार्भकैः वलयित इवाभाति । स्वरूपोत्प्रेक्षालंकारः ॥८२॥

यद्ब्रह्मणश्च जनिभूः प्रियमिन्दिरायाः
सस्पर्धमोषधिपतौ च सकर्णिकं च ।
एतैर्गुणैर्गुणनिधे कतमस्त्वदीयं
वक्त्रं मनोज्ञमवगच्छतु नारविन्दम् ॥

हे गुणनिधे, त्वदीयं वक्त्रं ब्रह्मणः ब्राह्मणजातेः, पद्म-पक्षे चतुर्मुखस्य जनिभूः उत्पत्तिस्थानम्, इन्दिरायाः प्रियं प्रीत्यास्पदम्, ओषधिपतौ चन्द्रे सस्पर्धं च । एकं सादृश्यादन्यत्तदुदये स्वस्य निमीलनात् । सकर्णिकं कर्णिकया कर्णाभरणेन, पक्षे मध्यावयवेन सहितं चेति यत् । एतैर्गुणैर्मनोज्ञं तव वक्त्रम् अरविन्दं कतमो नावगच्छतु ? सर्वस्याप्यरविन्दमित्यवगन्तुमर्हमित्यर्थः ॥ ८३ ॥

वक्त्रेण ते यदभिभूतमभूत्सरोजं
तन्नाभिभूतमिति शब्दमवाप्य नूनम् ।
शब्दच्छलादपनिनीषु जनापवादं
नाभेरभूत्तव रमाधिप विश्रुतायाः ॥८४॥

हे रमाधिप, ते वक्षेण सरोजमभिभूतमभूदिति यत् तेन हेतुना जातं जनापवादं नाभिभूतमिति शब्दमवाप्य शब्दच्छलादपनिनीषु सत् विश्रुतायाः प्रसिद्धायाः तव नाभेरभूत्। प्रसिद्धाभामितो भवनादेव नाभिभूतमिति शब्दः प्रसिद्धो भवतीति भावः। अत्र सरोजस्य भगवन्नाभिसंभूतेर्जनापवादापनयनं फलत्वेनोत्प्रेक्षितमिति फलोत्प्रेक्षा नूनमिति व्यञ्जकशब्दप्रयोगाद्वाच्या नाभिभूतशब्दश्लेषापेक्षेति संकरः ॥

उन्मीलयन्कुमुदमुज्ज्वलयन्गिरीश-
मुन्मूलयन्विषमवाहभवाभितापम्।
उद्दीपयन्वरवधूजनतानुराग-
मुद्द्योतते वरद ते वदनामृतांशुः ॥८५॥

हे वरद, कुमुदं कोर्भूमेः मुदम् अहमपि भगवतः परिपूर्णस्य वरदरूपेण मयि नित्यसंनिधानात्परमशुद्धा जातास्मीत्येवमानन्दं भूगतानां मनुष्याणामानन्दं वा, चन्द्रपक्षे कैरवम्, उन्मीलयान्विकासयन्, गिरीशं गिरिवरं हस्तिशैलम्, पक्षे शिवम् उज्ज्वलयन्भूषयन्, विषमवाहभवाभितापं विषमतिकृच्छ्रं दुःखं वाहयति प्रापयतीति विषमवाहो यो भवः संसारः तत्कृतमभितापम्, पक्षे विषमवाहः सूर्यः तद्भवं तत्संभवमभितापमुन्मूलयन् नाशयन्, वरवधूजनताया अनु-

रागमुद्दीपयन् । उभयत्र सममेतत् । तव वदनमेवामृतांशुः उद्द्योतते । सभङ्गाभङ्गशब्दार्थश्लेषानुप्राणितो रूपकालंकारः ॥

पक्षद्वयकृशिमपोषविभाव्यमान-
चान्द्रायणव्रतनिषेवण एव नित्यम् ।
कुर्वन्प्रदक्षिणमुपेन्द्र सुरालयं ते
लिप्सुर्मुखाब्जरुचिमेष तपस्यतीन्दुः ॥

हे उपेन्द्र, ते तव मुखाब्जरुचिं लिप्सुः एष इन्दुः प्रसिद्धश्चन्द्रः पक्षद्वये कृष्णशुक्लपक्षद्वये यौ कृशिमपोषौ ताभ्यां विभाव्यमानं चान्द्रायणव्रतनिषेवणं यस्य सः तथाभूत एव सन् सुरालयम् इष्टदेवतालयं रत्नसानुं च नित्यं प्रदक्षिणं कुर्वन् तपस्यति । अत्र लिप्सुरिति फलोत्प्रेक्षया चान्द्रायणव्रतनिषेवणकल्पनारूपातिशयोक्त्या मेरावदृष्टार्थिपुरुषप्रदक्षिणीकर्तव्येष्टदेवतालयत्वाध्यवसानरूपातिशयोक्त्या चोत्थापितः चन्द्रगततपोरूपधर्मोत्प्रेक्षालंकारः । कृष्णप्रतिपदि पञ्चदश ग्रासाः द्वितीयामारभ्यैकैकग्रासहानिः ततः शुक्लप्रतिपदमारभ्यैकैकग्रासवृद्धिरित्येवं ग्रासनियमयुक्तो व्रतविशेषश्चान्द्रायणम् । तदनुष्ठानेऽपि ग्रासह्रासवृद्ध्यनुसारेण कृशिमपोषौ संभाव्येते ॥ ८६ ॥

नाथ त्वदीयमकलङ्कमिमं मुखेन्दु-
मापीय तृप्यति सदा वसुधा यतस्ते ।
तेनैव किं नवसुधारसगोचरोऽभू-
दिन्दुः कलङ्कमलिनीकृतमध्यभागः ॥

हे नाथ, त्वदीयमकलङ्कमिमं मुखेन्दुं वसुधा सदा नित्यम् , आपीय तृप्यति यतः तेनैव हेतुना किं कलङ्कमलिनीकृतमध्यभागः इन्दुः प्रसिद्धश्चन्द्रः नवसुधारसगोचरः अभूत् नवस्य सुधारसस्य आस्पदमभूत्। वसुधाया रसस्य आस्वादनेच्छाया गोचर आस्पदं नाभूदित्यपि सभङ्गश्लेषेण प्रतीयते । तत्र च हेतुः कलङ्काकलङ्कविशेषणपदाभ्यामुक्तः । पदार्थहेतुककाव्यलिङ्गानुप्राणितः श्लेषमूलो हेतूत्प्रेक्षालंकारः ॥ ८७ ॥

आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षये विधृतदिव्यपदाभिमुख्याः ।
लावण्यपुण्यनिचयं सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥

प्रतिमासं भिन्ना अमृतद्युतयः चन्द्राः ते तव विष्णोः पदमाकाशम् , पक्षे चरणमाश्रित्य देहक्षये कृष्णपक्षावसाने प्राप्ते विधृतदिव्यपदाभिमुख्याः सन्तः लावण्यमेव पुण्यनिचयं सुहृदि सादृश्यात्सुहृत्त्वेनाध्यवसिते त्वदास्ये तव मुखे वि-

न्यस्य मिहिरं यान्ति सूर्यं प्राप्नुवन्ति नूनमित्युत्प्रेक्षा । ये भगवच्चरणं प्रपन्नास्ते देहावसानकाले भगवच्चरणप्रपदनमहिम्ना अर्चिरादिमार्गेण परमं पदं प्राप्तुमभिमुखाः सन्तः स्वकीयमभ्युदयसाधनं स्वानपेक्षितं पुण्यनिचयं सुहृदि निवेश्य उत्क्रमणानन्तरमेव सूर्यं प्राप्नुवन्तीति शास्त्रमर्यादा । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम्' इति यथा ब्रह्मविदः पुत्रा दायमुपयन्ति तथा तत्सुहृदां तदीयपुण्यप्राप्तिश्रवणात् 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति त्वरितमेवादित्यप्राप्तिश्रवणाच्च तदर्थोपजीविन्यत्रोत्प्रेक्षा । शुक्लप्रतिपदुदितस्य चन्द्रस्यामावास्यायामत्यन्तादर्शनात् 'नवो नवो भवति जायमानः' इति श्रुतेश्च प्रतिमासं भेदोऽध्यवसितः । तेनातीताश्चन्द्रा अनन्तकोटय इति लभ्यते । ते सर्वेऽपि चन्द्रा भगवत्पदमाश्रयन्ते देहावसानकाले च दर्शे सूर्यं प्राप्नुवन्ति सहजलावण्येन न दृश्यन्ते चेति संप्रतिपन्नमेवैतत् । एवं च सूर्यं प्राप्नुवन्तस्ते परमपदाभिमुखाः सन्तो लावण्यरूपं स्वकीयं पुण्यनिचयं सुहृदि भगवन्मुखे विन्यस्य यान्ति किमित्युत्प्रेक्षा । तस्याश्च पदशब्दश्लेषेण लावण्यपुण्यनिचयमिति रूपकेण सुहृत्त्वप्रतिमासभिन्नत्वाध्यवसायरूपातिशयोक्त्या संकरः । 'सुहृदः साधुकृत्याम' इति बहुवचनश्रवणात्सुहृत्सु बहुषु तावत्स्वपुण्यसंक्रमणावश्यंभावेऽपि अत्र सुहृदीत्येकवचनेन

भगवन्मुखमेव चन्द्राणां सुहृन्न मुखान्तराणीति तस्येतरमुखेभ्यो व्यतिरेकोऽपि व्यञ्जितः । ततश्च तस्मिन्नेव चन्द्राणां सर्वेषां स्वस्वयावल्लावण्यपुण्यविन्यसनेनोत्प्रेक्ष्यमाणेन कारणेन तत्कार्यं भगवन्मुखस्यानन्तकोटिचन्द्रलावण्यशालित्वं वर्णनीयतया प्रकृतं प्रतीयत इत्यप्रस्तुतप्रशंसालंकारः ॥ ८८ ॥

**त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा-**
**भङ्गात्ततत्सुषममित्रकरोपक्लृप्त्या ।**
**लब्ध्वापि पर्वणि विधुः क्रमहीयमानः**
**शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥**

अयं विधुः प्रसिद्धश्चन्द्रः पर्वणि पूर्णिमायाम् अम्बुजस्य कोशः कुट्मलः स एव अम्बुजरूपभाण्डागारं तस्य मुद्रा मुकुलीभावो मुद्रणं च तस्य भङ्गेन विकासनात्मकेन, तद्द्वारेणार्थः । आत्ता गृहीता तत्सुषमा तच्छोभा यैस्तादृशा ये मित्रकराः सूर्यकिरणाः सुहृत्पाणयश्च तेषामुपक्लृप्त्या लाभेन त्वद्वक्त्रस्य साम्यं लब्ध्वा प्राप्यापि क्रमेण हीयमानः क्षीयमाणः सन् स्वयमनीत्योपचितामन्यायेन वर्धितां श्रियम् आशु नाशो यस्यास्तामाशुनाशां शीघ्रनाशां शंसति । अत्र चन्द्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृत्त्वेन सूर्ये मित्रशब्दश्लेषेण

परिकल्प्य तत्किरणजालस्य कमलमुकुलविकासकस्य चन्द्रानुप्रवेशं च सुहृत्पाणेर्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकं ततो गृहीतभगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपं च परिकल्य एतावतापि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्यरूपेष्टप्राप्तिर्जायते न सार्वकालिकीति प्रतिपादनादिष्टार्थं समुद्यतस्य परिपूर्णतत्प्राप्त्यभावरूपो विषमालंकारभेदः। त्वद्वक्त्रसाम्यं लब्ध्वेति प्रसिद्धोपमानस्योपमेयत्वकल्पनात्प्रतीपालंकारः। कोशमुद्राशब्दयोः श्लेषमूलातिशयोक्त्यलंकारः। कमलमुकुलविकासनस्य तत्रत्यभगवन्मुखलक्ष्मीग्रहणार्थसुहृत्करव्यापारत्वस्य तद्विकासकसूर्यकिरणजालगतचन्द्रानुप्रवेशस्य गृहीतया भगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थसुहृत्करव्यापारत्वस्य च परिकल्पनरूपातिशयोक्तिः। शंसतीत्यनेन स्वयं दृष्टान्तो भूत्वा अन्यायोपार्जिता श्रीराशुनाशेति परान्बोधयतीति प्रतिपादनादसंभवद्वस्तुसंबन्धनिबन्धनो निदर्शनाभेदः। एवमप्रस्तुतचन्द्रवृत्तान्तवर्णनेन स्वयं दृष्टान्तो भूत्वा वर्णनीयत्वेन प्रस्तुतो भगवन्मुखशोभातिशयः प्रतीयत इत्यप्रस्तुतप्रशंसालंकार इत्येतेषां संकरः। 'निदर्शना स्वक्रियया परेषां बोधनं मतम्। नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः॥' इत्यसंभवद्वस्तुसंबन्धनिबन्धनानिदर्शनाया लक्षणोदाहरणे। अत्र नश्येदिति बोधयदित्यस्य गम्यमानत्वादप्रयोगः। शंसतीत्ये-

तत्त्वार्थबाधादतिस्पष्टं बोधयतीत्यर्थे पर्यवसितम् ॥ ८९ ॥

**दृग्भ्यां मुकुन्द मृगलोचनकोमलाभ्यां**
**जाताधिकद्युति विलोक्य तवाननाब्जम् ।**
**मन्ये स्वमण्डलमितोऽप्यधिकं विधित्सु-**
**स्तस्मिन्बिभर्ति मृगमेव जडः सितांशुः ॥**

हे मुकुन्द, मृगलोचनाभ्यामिव कोमलाभ्यां मनोहराभ्यां दृग्भ्यां तवाननाब्जं मुखं जाताधिकद्युति संभूताधिककान्तिकं जडः शिशिरः अज्ञश्च सितांशुश्चन्द्रः विलोक्य स्वमण्डलम् इतः त्वन्मुखादपि अधिकं विधित्सुः सन् तस्मिन्स्वमण्डले मृगमेव बिभर्तीति मन्ये । मृगलोचनसदृशाभ्यां लोचनाभ्यामेव कान्तिर्भवति न तु कृत्स्नेन मृगेणेति विवेकरहितश्चन्द्रो मृगमेव बिभर्तीति भावः । अत्रोपमानुप्राणिता फलोत्प्रेक्षा । ततः पूर्ववदप्रस्तुतप्रशंसालंकारः ॥ ९० ॥

**मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ**
**धत्तो मुखे तु तव दृक्तिलकात्मनाभाम् ।**
**दोषावितः क्वचन मेलनतो गुणत्वं**
**वक्तुर्यथेश वचसि भ्रमविप्रलम्भौ ॥**

हे ईश, मधुलिट्कलङ्कौ अब्जशशिनोः मालिन्यं धत्तः ।

मधुलिह्रा हि पद्मस्य कलङ्केन चन्द्रस्य च मालिन्यं प्रसिद्ध-मेव । तौ मधुलिट्कलङ्कौ तव मुखे तु दृक्तिलकात्मना दृगात्मना मधुलिट् तिलकात्मना कलङ्कश्च आभां शोभामेव धत्तः । एकैकस्यापि दोषत्वे कथमुभयं मिलितं गुणः स्यादिति शङ्कायां तदुपपाद्यते—दोषावपि सन्तौ मेलन्तो मेलनेन हेतुना कचन गुणत्वम् इतः प्राप्नुतः । वक्तुर्वचासि यथा भ्रमविप्रलम्भौ वक्तुः केवलं भ्रमः केवलं विप्रलम्भश्च वाक्यस्याप्रामाण्यावहो दोषो भवति । उभौ मिलितौ तत्प्रामाण्यावहतया गुणत्वमेव भजतः । यथा विप्रलम्भकः सत्येव सद्मनि देवदत्ते स नास्तीति भ्राम्यन्सद्मनि देवदत्तोऽस्तीति परं बोधयति तद्वाक्यं प्रमाणमेव भवति । अत्र प्रथमप्रदर्शितविशेषोपपादनार्थं सामान्यमुपन्यस्य तत्राप्युपपादनापेक्षायां तदुपपादनार्थं विशेषान्तरस्योपमानत्वेन निबन्धनाद्विकस्वरालंकारः । 'यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः । स न जिग्ये महान्तो हि दुर्धर्षाः सागरा इव ॥' इति तल्लक्षणोदाहरणे ॥

आमोदकान्तिभृदहर्निशमेकरूप-
मासेवितं द्विजगणैर्द्विविषड्गणैश्च ।
अङ्काधिरूढसहजश्रि मुखं त्वदीयं
शङ्कामहे वरद संहतपङ्कजयुग्मम् ॥ ९२ ॥

हे वरद, त्वदीयं मुखं संहतं परस्परमेलनेनैकीभूतम् अब्जयोः पद्मचन्द्रयोः युग्मं शङ्कामहे इत्युत्प्रेक्षा । तथोत्प्रेक्षानिमित्ततया भगवन्मुखे पद्मचन्द्रोभयगुणयोगो विशेषणैः प्रदर्श्यते—आमोदकान्तिभृत् आमोदमात्रं पद्मे कान्तिमात्रं चन्द्रे । मुखं तु तदुभयशालि । अहर्निशमेकरूपम् अहन्येव पद्मस्य प्रसादः रात्रावेव चन्द्रस्य । अह्नि रात्रावपि मुखस्य । पद्मं द्विजगणैः पक्षिगणैरासेवितं चन्द्रो दिविषद्गणैरमृतं पिबद्भिः । इदं तु ब्राह्मणगणैर्देवगणैश्चासेवितम् । पद्ममङ्काधिरूढलक्ष्मीकं चन्द्रः सहोदरलक्ष्मीकः । इदं तु अङ्काधिरूढा समीपदेशव्याप्ता सहजा आजानसिद्धा श्रीः कान्तिर्यस्येति व्युत्पत्त्या अङ्काधिरूढसहजश्रि । 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानावमानयोः' इति केशवः । 'सहजं निजमाजानम्' इति यादवः । अत्रोत्प्रेक्षाया द्विजाङ्कसहजश्रीशब्दश्लेषेण संकरः ॥ ९२ ॥

**बिम्बस्तवायमधरः प्रतिबिम्बनेन**
**युक्तं सदा युवतिमानसदर्पणेषु ।**
**बिम्बाधरः कविभिरीश्वर वर्ण्यसे त्व-**
**मेतावतैव न तु तुच्छफलोपमानात् ॥**

हे ईश्वर, तवायमधरो बिम्बः । युक्तम् । केन हेतुना ? सदा युवतिमानसदर्पणेषु प्रतिबिम्बनेन । यावत्प्रतिबिम्बानु-

वृत्ति बिम्बत्वं युक्तमेव । एतावतैव त्वं बिम्बाधर इति कविभिर्वर्ण्यसे, न तु तुच्छफलोपमानात् अतिक्षुद्रबिम्बाख्यफलसादृश्यात् । अधिकव्यतिरेकालंकारोऽपह्नुतिविशेषगर्भः ॥

विद्यामयेषु तव निःश्वसितेष्वपूर्वं
विद्याविशेषमिव शिक्षितुमन्तरात्मन् ।
वाण्याः सदा तव मुखाम्बुरुहे वसन्त्याः
कायप्रभेव लसति स्मितचन्द्रिका ते ॥

हे अन्तरात्मन्, ते तव स्मितचन्द्रिका विद्यामयेषु 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः' इत्यादिश्रुतेः सकलविद्यारूपेषु तव निःश्वसितेषु अपूर्वं प्रागगृहीतं विद्याविशेषं शिक्षितुं ग्रहीतुमिव । 'शिक्ष विद्योपादाने' इति धातुः । सदा तव मुखाम्बुरुहे वसन्त्याः वाण्याः कायप्रभेव लसति । अत्र शिक्षितुमिवेति फलोत्प्रेक्षा । वाण्या इति कवितादिरूपायां वाचि मूर्तिमत्सरस्वतीतादात्म्याध्यवसायरूपातिशयोक्तिः । ताभ्यां कायप्रभेवेति स्वरूपोत्प्रेक्षायाः संकरः । मुखाम्बुरुहेति स्मितचन्द्रिकेत्युपमाभ्यां संसृष्टिः ॥ ९४ ॥

तापत्रयौषधवरस्य तव स्मितस्य
निःश्वासमन्दमरुता निबुसीकृतस्य ।

एते कडङ्गरचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति ॥

तापत्रयमाध्यात्मिकादिभेदभिन्नं तस्यौषधवरस्य तच्छान्त्यर्थदिव्यौषधस्य निःश्वासरूपेण मन्दमरुता निबुसीकृतस्य, बुसम् अन्तस्तण्डुलादिबीजरहितमुपरित्वङ्मात्ररूपं धान्यं खले बलीवर्दपदैर्घट्टितेन धान्यस्तम्बक्षोदादिना सहितम् । 'कडङ्गरो बुसं क्लीबे' इत्यमरः । बुसमिश्रितं धान्यं मारुतवति प्रदेशे पवनक्रियया बुसरहितं कुर्वन्ति । तथा कृतस्य तव स्मितस्य विप्रकीर्णाः कडङ्गरचया इव मारुतेन धान्यराशेः पृथक्कृत्य तत्र तत्र नीता बुसनिकरा इव एते जैवातृकस्य चन्द्रस्य किरणा जगति भ्रमन्ति । कडङ्गरा अपि अन्तस्तण्डुलरहिता लघुत्वेन वायुवशात्तत्र तत्र भ्रमन्ति । अत्रौषधवरस्येति रूपकम् । निबुसीकृतस्येति तदुत्थापितातिशयोक्तिः । कडङ्गरचया इवेति ताभ्यामुत्थापिता स्वरूपोत्प्रेक्षा । तैरनुप्राणितस्त्वप्रस्तुतप्रशंसालंकारः ॥ ९५ ॥

सिद्धौषधं जयति तेऽधररत्नपात्रे
तापत्रयी झटिति मुञ्चति येन सिक्तम् ।
मन्ये तुषारकिरणं गुणलेशयोगा-
दस्यैव वारिजविलोचन कल्कपुञ्जम् ॥

ते तवाधर एव रत्नपात्रं तस्मिन् सिद्धौषधं जयति । येन व्याधिः शीघ्रं शाम्यतीत्यनुभवसिद्धं तत्सिद्धौषधमित्युच्यते । मन्दस्मितं तथात्वेनाध्यवसितम् । तस्य सिद्धौषधत्वमेवोपपाद्यते— येन सिक्तं तापत्रयी झटिति मुञ्चति । अथैतन्नारायणतैलादिवत्पाकसिद्धं कल्पयित्वा तदुपजीव्योत्प्रेक्ष्यते— हे वारिजविलोचन, तुषारकिरणं गुणलेशयोगात् किंचिदाधिभौतिकतापहरे तस्मिन्नेतदीयगुणलवयोगात् अस्यैव सिद्धौषधस्य कल्कपुञ्जं तैलस्य निष्पीडनात्सिद्धं सहपक्वमूलिकादिकल्कसंघं पिण्डीभूतं मन्ये । कल्केऽपि हि किंचिल्लेशतस्तैलगुणानुवृत्तिरस्ति । अत्र अधररत्नपात्र इति रूपकम् । सिद्धौषधमित्यतिशयोक्तिः । तापत्रयीत्यादिवाक्ये काव्यलिङ्गम् । उत्तरत्र तैरुत्थापिता स्वरूपोत्प्रेक्षेति संकरः ॥ ९६ ॥

**आतन्वतामवयवेषु गतागतानि**
**युक्तात्मनां वरद यौवतचक्षुषां च ।**
**विश्रान्तिभूर्विधुकरप्रकरावदाता**
**मन्दस्मितच्छविरियं तव मां पुनातु ॥**

हे वरद, तवावयवेषु गतागतानि आतन्वतां युक्तात्मनां भगवन्मूर्तिध्यानपराणां योगिमनसां यौवतचक्षुषां युवतिसमूहचक्षुषां च विश्रान्तिभूः गतागतानि कुर्वतां छायावृक्ष-

वद्विश्रान्तिस्थानभूता विधुकरप्रकरावदाता चन्द्रकिरणच्छटेव शुभ्रा तवेयं मन्दस्मितच्छविः मां पुनातु । योगिनां मनांसि भगवतः सर्वावयवानारोहावरोहक्रमेण चिरमनुसंधाय मन्दस्मितचन्द्रिकायां पश्चाच्चिरमवतिष्ठन्ते, 'तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् । विलोक्यैकत्र संयुज्यादङ्गे भगवतो हरेः ॥' इति, 'एकैकशोऽङ्गानि धिया विभावयेत्पादादि यावद्धसितं गदाभृतः । जितं जितं स्थानमपोह्य धारयेत्परं परं शुध्यति धीर्यथा यथा ॥' इति च भागवतवचनात् । कामिनीनां चक्षूंष्यपि नायकस्य सर्वेष्ववयवेषु चरित्वा नितान्तं मदनोद्दीपकसाकूतमन्दस्मिते चिरस्थायितां प्राप्नुवन्तीति विश्रान्तिभूरित्युक्तम् । अत्र योगिमनसां कामिनीचक्षुषां च गतागताचरणलक्षणैकक्रियायोगात् उभयोश्च भगवतो मुमुक्षुध्येयपरब्रह्मभावे सौन्दर्यातिशये च वर्णनीये उपयोगित्वेन प्रस्तुतत्वाविशेषाच्च तुल्ययोगितालंकारः । युवतिशब्दात्समूहार्थे 'भिक्षादिभ्योऽण्' इत्यणप्रत्यये यौवतमिति रूपम् । 'भस्याढे तद्धिते' इति पुंवद्भावस्तु न भवति, युवतिशब्दस्य भिक्षादिषु पाठसामर्थ्यात् 'तस्य समूहः' इत्येव युवतिशब्दात्प्राग्दीव्यतीये सिद्धेऽप्यणप्रत्यये तस्य भिक्षादिगणपाठस्य पुंवद्भावपालनार्थत्वात् । भाष्यवार्त्तिकयोस्तु समूहार्थे यौवनमित्येव रूपमङ्गीकृत्य युवतिशब्दस्य भिक्षादिगणे

पाठः प्रत्याख्यातः। तत्पक्षे 'यौवनचक्षुषाम्' इति पठनीयम्॥

निःश्वासमन्दमलयानिलकन्दलेन
निर्हारिणा बहुतरेण च सौरभेण।
नासापुटौ नलिननलोचन ते मनोज्ञौ
मन्ये सदैव मधुमाधवयोर्निवासौ॥९८॥

हे नलिनलोचन, ते मनोज्ञौ नासापुटौ सदा नित्यमेव मधुमाधवयोः वसन्तर्तुमासयोः निवासौ मन्ये। अत्र स्वरूपोत्प्रेक्षायां निमित्तमुच्यते—निःश्वास एव मन्दमलयानिलः तस्य कन्दलेनाङ्कुरेण निर्हारिणा दूरं विसृमरेण बहुतरेण सौरभेण च। 'समाकर्षी तु निर्हारी' इत्यमरः। उत्प्रेक्षाया निःश्वासमन्दमलयानिलेति रूपकेण संकरः॥ ९८॥

संचारशालि तव निःश्वसिते समस्त-
वेदेतिहासवपुषि द्विपशैलनाथ।
नाभीसरोरुहनवारुणमण्डले च
मन्ये मधुव्रतकुलं मधुविद्ययोक्तम्॥९९॥

हे द्विपशैलनाथ, समस्तवेदेतिहासवपुषि सकलवेदेतिहासस्वरूपे तव निःश्वसिते नाभीसरोरुहमेव नवारुणमण्डलं तत्र च संचारशालि संचारेण श्लाघ्यं श्रेष्ठं वा। तदुभये

सौरभलोभात् उभयत्रापि गतागताभ्यां परिभ्रमत् मधुव्रत-कुलं मधुकरपटलं मधुविद्यया मधुविद्याप्रतिपादकोपनिषद्भागेन उक्तं मधुव्रतकुलं मन्ये । छन्दोगानामुपनिषदि 'असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः । तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पम्' इत्यादिना मधुविद्योक्ता । तत्र द्यौः तिरश्चीनः तिर्यग्गतो वंशदण्डः यत्र मध्वपूपो लम्बते । अन्तरिक्षमपूपो मधुपटलं यन्मध्ये मधुकरैः संभृतं मधु तिष्ठति । मरीचयः पुत्राः भ्रमरबीजभूता मध्वपूपच्छिद्रस्थाः सूक्ष्मकीटाः । प्राच्यादिषु दिक्षु प्रसृता रश्मयो मधुनाड्यो मध्वाधारच्छिद्राणि । आदित्यमण्डलं मध्वपूपमध्यगतं मधु । मधु च मधुकरैः पुष्पेभ्यो रसं समाहृत्य संपाद्यते । अत्र ऋग्यजुःसामाथर्ववेदा इतिहासश्च पुष्पाणि । तेष्वाम्नाता ऋगादयो मन्त्रा मधुकराः ऋग्वेदादिविहितेषु कर्मसु सोमाज्यपयःप्रभृतीनि मन्त्रैरग्नौ हूयन्ते । तान्यादित्यरश्मिसंवलितैरग्निभिरुत्पन्नपाकान्यमृतभावमापन्नान्यादित्यमण्डलं प्राप्नुवन्ति 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति साधारण्यात् । अतस्तत्तत्कर्मबोधका ऋक्सामादयो मधुसमाहरणे मूलोपादानत्वात्पुष्पत्वेन निरूपिताः । मन्त्रास्त्वाहुतिकरणत्वेन तत्तद्रसानामेकीकरण-

कृत्त्वेन मधुनेतृत्वान्मधुकरत्वेन निरूपिताः । ततश्च मधुकराणां रससमाहरणार्थं पुष्पेषु समाहृतरससंयोजनार्थं मध्वपूपगते मधुनि च पुनः पुनर्गतागतं लोके दृष्टम् । अतो वेदेतिहासरूपेषु भगवन्निःश्वासेषु नाभीपद्मरविमण्डले च पुनः पुनर्गतागतं कुर्वन्मधुकरकुलं मधुविद्योक्तमधुकरकुलत्वेनोत्प्रेक्ष्यते । सा चोत्प्रेक्षा रूपकोत्थापितेति संकरः ॥ ९९ ॥

देहाद्वदन्ति जननं मुनयस्तिलानां
देवेन्द्रवन्द्यचरणाम्बुज तावकीनात् ।
नारायणैतदुचितं प्रकटीकरोति
नासाभिधानमिह दिव्यतिलप्रसूनम् ॥

हे देवेन्द्रवन्द्यचरणाम्बुज नारायण, मुनयः तावकीनाद्देहात् तिलानां जननं वदन्ति । एतत् तेषां वचनम् इह तव देहे नासाभिधानं दिव्यं नित्यमम्लानत्वेनाश्चर्यभूतं तिलप्रसूनं कर्तृ उचितं प्रकटीकरोति । अत्राप्तवाक्यप्रतिपन्नस्यार्थस्यातिशयोक्तिकल्पितेन लिङ्गेन दार्ढ्यं क्रियत इति तदुत्थापितोऽनुमानालंकारः ॥ १०० ॥

नेत्रे तव क्व भगवन्क्व च पुण्डरीकं
ब्रूते तयोस्तदुपमानमथापि वेदः ।

## सर्वात्मनस्तव समाधिकवस्त्वलाभा-
## दाकाशवत्स खलु सर्वगतत्वमाह ॥

अप्राकृते तव नेत्रे क तुच्छमिदं पुण्डरीकं क? अथापि वेदः तयोस्त्वन्नेत्रयोः तत्पुण्डरीकमुपमानं ब्रूते आह 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति। अधिकगुणं खलूपमानं निबद्धव्यम्। इदं पुण्डरीकं भवन्नेत्राभ्यां न्यूनगुणामिति वक्तुमपि प्रसक्तिरहितं कथमुपमानभावमश्नुवीत? अतस्तस्योपमानत्वेन निबन्धनमत्यन्तमनुचितमेव। एतदनौचित्यं वेदशैल्या परिह्रियते—स खलु वेदः सर्वात्मनः सकलचराचरप्रपञ्चात्मतया परिच्छेदातीतस्य तव सदृशाधिकवस्त्वलाभात् आकाशवत्सर्वगतत्वमाह। न हि प्रतिब्रह्माण्डं भिन्नभिन्नमित्यत्यन्तमेव परिच्छिन्नमाकाशं भगवतः सर्वगतत्वे उपमानतामर्हति। अथापि भगवतः सर्वगतत्वं केनाचिदुपायेन बोधयितुं प्रवृत्तो वेदः आकाशातिरिक्तं व्यापि वस्त्वपश्यन् तमेवोपमानीचकार। एवं शैल्या दर्शनादिदमपि तथेत्यनौचित्यपरिहारः। अत्र पूर्वार्धे विरूपघटनारूपो विषमालंकारभेदः। उत्तरार्धे वेदशैलीप्रदर्शनेन तदुपपादनम्। ततश्च सदृशाधिकवस्त्वलाभादाकाशस्येव पुण्डरीकस्योपमानत्वकल्पनमित्यौपम्यस्य गम्यत्वात् ब्रूत इत्याहेति चैकस्या एव क्रिया-

याः पृथगुपमानोपमेययोर्निबन्धनात्प्रतिवस्तूपमालंकार इति तेन विषमालंकारस्य संकरः । तेन वैषम्यसमाधानाशीरस्कोऽयं विषमालंकारः । ‘ विषमं वर्ण्यते यत्र घटनाननुरूपयोः । क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः ॥ वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता । तापेन भ्राजते सूरः शूरश्चापेन राजते ॥’ इति विषमप्रतिवस्तूपमयोर्लक्षणोदाहरणानि । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्म एक एव शब्दभेदेन पृथङ्निर्दिश्यत इति प्रतिवस्तूपमा ॥ १०१ ॥

**साम्यभ्रमादविनयेन समुन्नतस्य**
**सव्यं तवाक्षि हरति श्रियमम्बुजस्य ।**
**तस्यापि तां समधिकां तनुते यदन्य-**
**दाक्षिण्यमेव दनुजाहित तत्र मूलम् ॥**

हे दनुजाहित दैत्यरिपो, तव सव्यमक्षि चन्द्ररूपं साम्यभ्रमात् त्वदक्षिभ्यां स्वयं सममिति भ्रमात् अविनयेन गर्वेण समुन्नतस्य अम्बुजस्य श्रियं विकासशोभां संपदं च हरति । उत्कृष्टा हि राजादयः स्वसाम्यभ्रमादवलिप्तस्य प्रावण्यरहितस्य गर्वशान्तये संपदं हरन्ति । अन्यद्दक्षिणमक्षि सूर्यरूपं तस्यापि तथाभूतस्यापि अम्बुजस्य समधिकामधिकतरां श्रियं तनुते इति यत् तत्र दाक्षिण्यमेव वामेतरत् परच्छन्दानुवर्ति

च दक्षिणम् । ' विदग्धे च परच्छन्दानुवर्तिन्यपि दक्षिणम् । कुशली भट्टनन्थाह तथा यः कुल वाहवे । शरीरावयवे चापि वामस्य प्रतियोगिनि ॥ ' इति केशवः । तस्य भावो दाक्षिण्यं वामेतरत्वं तदेव दाक्षिण्यं परच्छन्दानुवर्तितापादकः सापराधेऽपि हिताचरणप्रवर्तकः आनुकूल्याख्यश्चेतोवृत्तिविशेषः । ' दाक्षिण्यमनुकूलता ' इति शब्दरत्नाकरः । उक्तरूपं दाक्षिण्यमेव तत्र कृतापराधस्याम्बुजस्य श्रीप्रदानेन बहूकरणे मूलम् । अत्र पद्मस्य जले प्ररूढस्य स्वतः सिद्धा समुन्नतिरवलेपहेतुकाग्रावण्यरूपाध्यवसितेत्यतिशयोक्तिः । तदीयविकासशोभाहरणं श्लेषेण तदीयैश्वर्यहरणत्वेनाध्यवासितमिति तत्राप्यतिशयोक्तिः । उभयोरप्यतिशयोक्तिसिद्धयोरर्थयोर्हेतुहेतुमद्भावस्य हेतुगर्भविशेषणेन प्रतीतेर्हेत्वलंकारः । उत्तरवाक्ये दाक्षिण्यरूपमनोवृत्तितयाध्यवसितस्य वामेतरत्वस्य तस्यापि तां समधिकामिति निर्दिष्टार्थस्य च हेतुहेतुमद्भावो मूलशब्देनैवोक्त इति तत्रापि श्लेषमूलातिशयोक्त्युत्थापितो हेत्वलंकार इत्युभयोः समप्रधानयोः परस्परानुप्राणितत्वेन संकरः । सव्यमन्यदिति विशेषणद्वयमक्ष्यन्वयिक्रियाद्वयोपपादनार्थमक्षिद्वयस्य चन्द्रसूर्यरूपत्वाभिप्रायगर्भमिति परिकराभ्यामपि हेत्वलंकारयोः संकरः ॥ १०२ ॥

**पद्मानुरागजुषि लोहितशुक्लकृष्णा-**
**मासेदुषि प्रकृतिमाहृतमीनरूपे ।**
**श्रुत्यन्तभासिनि मदावलशैलनाथ**
**त्वल्लोचने त्वयि च भाति न मे विशेषः ॥**

हे मदावलशैलनाथ मदावलशैलो नागाचलः तस्य स्वामिन्, पद्मानुरागजुषि सादृश्यरूपकमलसौहार्दजुषि लोहितशुक्लकृष्णां प्रकृतिं रेखासु गोलके कनीनिकायां च लौहित्यादिवर्णत्रयशालिनं स्वभावमासेदुषि प्राप्तवति आहृतमीनरूपे अङ्गीकृतमीनाकारे श्रुत्यन्तभासिनि कर्णान्तविश्रान्ते त्वल्लोचने त्वयि च विशेषो न मे भाति । साम्यमेव भातीत्यर्थः । विशेषणानां भगवति योजनायाम्, पद्मा लक्ष्मीः, प्रकृतिस्त्रिगुणा । 'अजामेकाम्—' इत्यादिश्रुत्या प्रकृतेर्लोहितादिवर्णत्रयशालित्वम् । मीनरूपं मत्स्यावतारः । श्रुत्यन्तो वेदान्तः। श्लेषोत्थापित उपमालंकारः ॥ १०३ ॥

**मुक्तः प्रजापतिरयं मम दर्शनादि-**
**त्यन्यं विधातुमनसस्तव भालजाता ।**
**घर्माम्बुबिन्दुततिरेव किरीटमूल-**
**प्रत्युप्तमौक्तिकततिच्छलतो विभाति ।**

अयं प्रजापतिः योऽश्वमेधेनाराधयामास अयमुत्तरवेद्या-

माविर्भूतस्य मम दर्शनान्मुक्तो जात इति हेतुना अन्यं विधातुमनसः लोकसृष्ट्यर्थमन्यं प्रजापतिं स्रष्टुकामस्य तव भालजाता ललाटोत्पन्ना घर्माम्बुबिन्दूनां स्वेदजलकणिकानां ततिरेव किरीटमूलप्रत्युप्तमौक्तिकततिच्छलतः मुकुटमूलभागनिबद्धमुक्ताफलपङ्क्तिव्याजेन विभाति । अत्र चतुर्मुखस्य सृष्टिर्भगवल्ललाटस्वेदनिदानेति महोपनिषद्याम्नायते— 'अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाध्यायत । तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत् । ता इमा आपस्ताभ्यः सुतेजो हिरण्मयमण्डमभवत् । तत्र ब्रह्मा चतुर्मुखोऽजायत ।' इति तदर्थमुपजीव्य नेमानि मौक्तिकानि किं तु ललाटबद्धस्वेदबिन्दव एवेति च्छलशब्देनापह्नुतिर्निबद्धा । प्रजापत्यन्तरासिसृक्षायां स्थितस्य प्रजापतेर्मुक्तत्वं हेतुत्वेन निबद्धमिति हेत्वपह्नुत्यलंकारयोः संकरः ॥ १०४ ॥

**राजन्त्यनर्घमणिसंघमये किरीटे**
**राजीवलोचन न नीलमणिप्रवेकाः ।**
**आघ्राय गन्धमलिनस्तव कुन्तलाना-**
**मन्तः प्रवेष्टुमनसः परितो निलीनाः ॥**

हे राजीवलोचन, अनर्घमणिसंघमये अमूल्यरत्नबृन्दप्रचुरे तव किरीटे नीलमणिप्रवेकाः इन्द्रनीलरत्नोत्तमाः न राजन्ति

किं तु अभितः समन्ताद्विस्रमरं तव कुन्तलानां गन्धमाघ्राय अन्तः प्रवेष्टुमनसः गन्धलोभादन्तः प्रवेष्टुकामाः तदर्थं परितो निलीनाः अलिनो मधुव्रताः राजन्ति । अत्र विषयापह्नवेन विषय्यारोपाद्वाक्यभेदेनापह्नुत्यलंकारः ॥ १०५ ॥

**आपादमाचिकुरभारमशेषमङ्ग-**
**मानन्दबृन्दलसितं सुदृशामसीमम् ।**
**अन्तर्मम स्फुरतु संततमन्तरात्म-**
**न्नम्भोजलोचन तव श्रितहस्तिशैलम् ॥**

हे अन्तरात्मन्, अम्भोजलोचन, सुदृशां सुलोचनानामुत्तमस्त्रीणां सम्यग्ज्ञानवतां ब्रह्मज्ञानां च । 'दृग्ज्ञानं त्रिषु' इत्यमरः । असीममममर्यादं निरतिशयम् आनन्दबृन्दलसितमुल्लसद्रसं विजृम्भमाणं श्रितहस्तिशैलम् आपादमाचिकुरभारं तव अशेषमङ्गं सर्वेऽवयवाः । जातावेकवचनम् । यद्वा सर्वं वपुः 'सर्वः पटोऽयमरुणः' इतिवत् अवयवकात्स्न्र्ये अशेषशब्दः । सर्वावयवयुक्तं च वपुरिति यावत् । 'अङ्गं शरीरावयवे शरीरोपाययोर्गुणे' इति केशवः । मम अन्तः हृदि संततं सदा स्फुरतु प्रकाशताम् । हेतुहेतुमतोर्भगवद्विग्रहतदालोकनजनितातिशयानन्दयोरैक्यस्य व्यपदेशाद्धेत्वलं-



कारभेदः । ' हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते । लक्ष्मीविलासा विदुषां कटाक्षा वेंकटप्रभोः ॥ ' इति तल्लक्षणोदाहरणे । फलावश्यंभावतच्छैघ्र्यप्रत्यायनमैक्यव्यपदेशस्य प्रयोजनम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना श्रीमदप्पयदीक्षितेन कृतं वरदराजस्तवविवरणं संपूर्णम् ।



